विसमसरमहभडवाणधोरिणीहिं, तप्पडियारनिमित्तं अवहरिऊण तं गओ, संपयं च गंगाकूले धवलकूडाभिहाणपव्वए वंधुमईइ परिणयणसामग्गिं कुणमाणो चिट्ठइ, ता समागच्छ तुमं जेण तत्थ नेमि, एवं होउत्ति पडिवन्ने विमणे समारोविऊण नीओ तत्थ कुमारो, दिट्ठो य तत्थ खेयरो वंधुमई य, केरिसी सा?, अंतोसंधुक्कियसोयदहणधूमाउलं च नियदिट्ठिं। पुरओठियम्मि खयरे उत्थायंती सहत्थेहिं ॥ १४५ ॥ कज्जलकासिणीकयनयणवारिधारामिसेण कीरिंती। पावपरमाणुपंतिं व विमलसीलाणुहावेण॥१४६॥ दुट्ठ! तुमए न कज्जं मह अम्मापियरदुक्खजणएण। इय परिणयणत्थं पत्थमाणखयरं निवारंती ॥ १४७ ॥ तत्तो खयरो कुमरेण हक्किओ रे किमयमारद्धं ?। तक्करजणाण उचियं बुहजणपरिनिन्दियं अहम! ॥ १४८ ॥ तओ तं सोऊण संभंतो खेयरो, विम्हिया-वंधुमई, किमेयंति निरिक्खंतेहिं दिट्ठो खरोव्व विप्फुरियतेओ पुरंदरकुमारो, तओ नूणं बंधुमईकुढावयम्मि आगओ कोऽवि एसोत्ति चिंततो ठाविऊण करम्मि कोदंडं खयरो भणिउमाढत्तो-रेरे वालय! ओसरसु हंत मा निप्फलं कुणसु झंपं। सलभोव्व मज्झ वाणानलम्मि अविदिट्ठपरमत्थो ॥१४९॥ ततो कुमारेण भणियं कज्जेसु जो विमुज्झइ तं चिय बालं भणंति मुणियत्था। तं पुण तुह पयडं चिय बंधु-मईहरणमूढस्स ॥ १५० ॥ नियदुच्चरियहमस्सावि ता तुह पहरेमि किं अहं एत्थ?। तं पुण पहरसु पढमं जइ अज्जवि गव्वमुव्वहसि ॥ १५१ ॥ खयरो कुविओ मुंचइ सरानियरं तस्स तो कुमारस्स। बाणेहिं ताडिऊणं सयखंडं कुणइ तं कुमरो ॥ १५२ ॥ तत्तो य अग्गिसत्थं मुंचइ खयरो तयंपि पज्जलियं। कुमरो विज्जादिण्णेण नीरसत्थेण विज्झवइ ॥ १५३ ॥ तत्तो य विसहरत्थं गारुडसत्थेण विहणइ कुमरो। मेहत्थंपि निवारइ समीरसत्थेण पवलेण ॥ १५४ ॥ तो बंधुमई चिंतइ अचिंतमाहप्पसंजुओ कोऽवि। एस महप्पा मज्झवि अदिट्ठपुव्वो पिउगिहंमि ॥ १५५ ॥ ता नूण होज्ज एसो अम्हाणऽणुकंपओ सुरो कोई। अह होज्ज

नरोऽवि इमो ता किं किर देवलोएण? ॥ १५६ ॥ इय जाव सा वियप्पइ ताव महंतो अओमओ गोलो । मुंचंतो जालाओ मुक्को खयरेण कुमरस्स ॥ १५७ ॥ तो चिंतइ बंधुमई अहो अउन्नाए मज्झ कज्जम्मि । एसोऽवि हु सप्पुरिसो कोऽवि महाआयवं पत्तो ॥ १५८ ॥ इय जाव चिंतइ इमा ता विज्जं सुमरिऊण कुमरेण । चुण्णीकओ खणेणं पडिगोलेणं इमो गोलो ॥ १५९ ॥ इयमणुवमसुहडत्तं दट्ठुं कुमरस्स विम्हिया बाला । विद्धा मयणेण सरेहिं खेयरो पुण कुमारेण ॥ १६० ॥ तओ सो मणिकिरीडो उरत्थलंमि बाणेहिं गाढप्पहारीकओ मुच्छापरव्वससरीरो निमीलंतनयणपंकओ सिढिलंतसंधिबंधणो निवडिओ धरणीयलम्मि, तओ समासन्नो कुमारो, समुप्पन्नकरुणेण य समुद्धरियाणि सल्लाणि, सिंचिओ जलेणं, समासासिओ कयलीपत्ताइपवणेण, तओ लद्धचेयणो भणिओ जहा- उट्ठेह भो महायस ! गिण्ह-धणुं होसु जुज्झसज्जोत्ति । काउरिसाच्चिय जं (एवं) भवंति न पुणो विअप्पाणा ॥ १६१ ॥ तओ निम्मलगुणरंजियमाणसो विलग्गो कुमारचलणेसु खेयरो, कयंजली भणिउमाढत्तो-अहो असरिसं महाभाग! तुज्झ साहसं, अणुत्तरा गंभीरया अणुवमं गरुयत्तणं अउव्वा रूवाइसंपया अच्चब्भुयं किंपि वयणविण्णाणं अणण्णसाहारणो करुणारसो, किं बहुणा ?– तुह ससिनिम्मलगुणरज्जुनियंतिओ अहं धीर! । तुह निद्देसकरोच्चिय, तो जं जुत्तं तयं कुणसु ॥१६२॥ तो बंधुमई चिंतइ किं तेवि जियंति एत्थ जियलोए । जे थुव्वंति न एवं दप्पुद्धरवेरिवग्गेण ? ॥ १६३ ॥ लावण्णरूवसुंदरसुंदरा कावि सच्चिय सउण्णा । महिलासद्दं एयस्स वहइ जा गुणमहोवइणो ॥ १६४ ॥ अहं पुण अउण्णा किं करेमि ?, जओ-मयणग्गिजालपलित्ताणि पत्थंति मज्झ अंगाइं एयस्स संगमजलं, न जुज्जए य एयं पाणिग्गहणं विणा कुलंगणाणं, तंपि अम्मा-पिऊहिं अणणुण्णायाणं अजुत्तमेव, न य नज्जइ कोऽवि एस महाणुभावो अम्हारिसेहि य सह संबंधं इच्छइ वा नवत्ति, इय एवमाइ

जाव एसा विचिंतेइ ताव कुमारो खयरेण सह खणमेगं जंपिऊण तेणेव अणुगम्ममाणमग्गो पयट्टो बंधुमईए समीवं गंतुं, तओ न नज्जइ कोऽवि एसोत्ति ससंभमा असंभावणीओ एयस्स पुरिसायारोत्ति सविम्हया एगागिणी एत्थ अहंति सलज्जा खयरोवि आगच्छइत्ति सकोवा अणुत्तरो इमस्स रूवाइगुणगणोत्ति सकामा हीणगुणा एसत्ति ममं न पडिवज्जइत्ति सविसाया मेलिस्सइ एस अम्मपिऊणंति सउक्कंठा एसोऽवि आगच्छंतो ममं सकामाए दिट्ठीए अवलोयइत्ति साणंदा समासन्नो आगओत्ति सकंपा, एवमाइ संकिन्नं किंपि रसंतरं अणुहवमाणी दिट्ठा कुमारेण बंधुमई, तीसे य पुरो ठाइऊण भणियं-मा कुणसु भयं बाले ! तुह पिउमित्तस्स विजयसेणस्स। रण्णो पुत्तो अहयं सव्वं एमाइ जा पत्तो ॥ १९४ ॥ तओ तं सोऊण समासासिया एसा, जाव य तं घित्तुण किर नियत्तिस्सइ कुमारो ताव सविणयं भणियं खयरेण, जहा- 'अज्जप्पभिई भगिणी बंधुमई मज्झ तं पुण कुमार !। सामी सुहिव्व बंधुव्व तेण मह पत्थणं सुणसु ॥ १९५ ॥" तओ भणियं कुमारेण-भणसु भो महायस ! निव्वियप्पं जं मएवि किं साहिज्जइ?, तओ खयरेण भणियं-जइ एवं तो कुमार ! वेयड्ढे पव्वए गंधसमिद्धे नयरे अणुग्गहं काऊण बंधुमईए सह नियपयपंकएहिं कुणह तुब्भे पवित्तं मज्झ गिहं, तओ अहं कयत्थो भवामित्ति; तहत्ति पडिवन्नामिणं कुमारेण. गयाणि सव्वाणिवि तत्थ, कया य विज्जाहरेण तेसिं गरुया पडिवत्ती, तओ तत्थ गरुयहरिसेण कइवइय दिणाणि चिट्ठिऊण भणिओ कुमारेण मणिकिरीड-विज्जाहरो, जहा मए तुह समक्खं चेव कहियं बंधुमईए, जहा दससदिणब्भंतरे तुमं मए सूररायस्स दंसणीयत्ति, ता सव्वहा विसज्जेह जेण वच्चामो, तओ नाणाविहवत्थाभरणाणि रयणाइ सावत्तेयं बहुप्पयारं दाऊण विसज्जिओ कुमारो, बंधुमईवि बहुविहवत्थालंकारेहिं पूइऊण विसज्जिया, अप्पणावि बहुखेयरवंदपरिगओ तेहिं चेव सह पट्ठिओ खेयरो, पत्ताइं च अकाल-

वैताढ्ये नयनं

परिहीणं चेव नंदिउरासन्नदेसे, वद्धाविओ य पुरओ गंतूण एगविज्जाहरेण राया, ततो नवपाउसागमे सिहंडिव्व हरिसिओ नरवई पणच्चियं कंचुईहिं समूससियं अवरोहपुरंधीहिं समुल्लसियं परियरेण कलियलियं बंदिविंदेण हरिसनिब्भराइयं पउरलोएण समासासियं सामंतमंतिवग्गेण पवियंभियं सव्वत्थ आसीवयणेहिं पुरंदरकुमरस्स, तओ राया णयरे महुस्सवं आइसिऊण अंतेउरपउरसामंतमंतिपमुहनिस्सेसनिययसामग्गीए नीहरिओ कुमारस्स, पच्चउणिंतओ रायाणं आगच्छंतं दट्ठूण दूराओ चेव, तत्थ य समागयसिरिनंदणवाहाए विलग्गिऊण अवयरिओ विमाणाओ पुरंदरकुमारो, तयणुमग्गओ य अभिमुहागयचंपयलयाकुसुमसोहाए सहीए बाहासु विलग्गिऊण अवयरिया बंधुमई, तओ य मणिकिरीडो, एत्थंतरे य आसन्नं वच्चंतो कुमारो सरिइंदुवयणो कयमयणाउराए दिट्ठीए अवलोइओ खणमेगं बंधुमईए, तओ संभंताए पुणरवि नियत्तिया तओ मुहा नियदिट्ठी तक्खणं चेव, विण्णाओ परमत्थो चंपयलयापमुहाहिं पियसहीहिं, जयपयडंति न कस्सइ निउणा गोवंति तहवि छेएहिं। कामाउराण दिट्ठी लक्खिज्जइ लक्खमज्झंमि ॥ १ ॥ तओ अन्नओहुत्तं मुहं काऊण सव्वाहिवि परोप्परमवलोयंतीहिं हसियं, तओ बंधुमईए भणियं-हला किं एयं ?, तओ ताहिं भणियं-सामिणि ! अम्हेहिं मग्गतीरट्ठिओ एस नयणहिययाणंदजणणो अईव रमणिज्जो चूयपायवो दिट्ठो, तस्स आसन्ने अमयवल्ली परूढा, सा य तम्मि चेव विलग्गिउं सेसपायवे मोत्तूण तयभिमुहा चेव पयट्टा, तओ अणुरूवो अईव एएहिं संजोगोत्ति परितुट्ठाहिं हसियं अम्हेहिं, तम्मो-अद्धच्छिपिच्छियाइं दूरे चिट्ठंति वंकभणियाइं। ऊससियंपि मुणिज्जइ, छइल्लजणसंकुले गामे ॥ १ ॥ एवमाइ विचिंतिऊण सविलक्खं हसिऊण य जाव बंधुमई किंपि जंपिस्सइत्ति, ताव पणमिओ राया कुमारेण, रण्णावि हत्थीओ ओयरिऊण हरिसगलंतसुजलेण सायरमवगूहिओ कुमारो, बंधुमईवि निवडिया रायच-

लणेसु, रण्णावि ससिणेहमवगूहिऊण चंपिया मत्थयंसि, तओ गया निययमाऊए कणगप्पभाए समीवं, कया य तत्थ सव्वासिं अंतेउरीणं उचियपडिवत्ती, ताहिंवि निवेसिया उच्छंगेसु, दिण्णाइं आसीवयणाणि, काराविया कुमारेण मणिकिरीडाइणो रण्णो पणामं, कया य तेसिं रण्णा उचियपडिवत्ती, पविट्ठा य सव्वे महाविभूईए नयरमज्झे, तओ करिवरारूढरण्णो समीवे दट्ठूण कुमारं भणंति नयरविद्धाओ, जहा-जीवउ एस कुमारो अम्हाणवि जीविएण जेणेयं । वसणसमुद्दे पडियं उद्धरियं सयलरज्जंपि ॥१॥ तरुणरमणाण मज्झे पुण कावि भणइ, जहा—अन्नं वरमलभंतो अणुरूवं तिहुयणेऽवि कुमरीए । किं एस विसइ नयरे परिणयणत्थं सयं मयणो ॥१॥ अन्या पुनराह—पुहईए दंसणत्थं नूण सुरो कोऽवि आगओ एस । रूवाइगुणसमूहो न घडइ अन्नस्स जेणेसो ॥१॥ अपरा पुनर्वदति-जाणामि ताव अहयं उचियवरो एस चेव कुमरीए । काही जं दुट्ठविही तं पुण सम्मं न याणामि ॥ १ ॥ सलहिज्जंतो पुरसुंदरीहिं एमाइविविहवयणेहिं । सयलजणाणंदयरो पत्तो कुमरोऽवि गेहम्मि ॥ ३ ॥ तओ रण्णो महाणपुरिसदंसिएसु ठिया मणिकिरीडाइणो महंतपासाएसु, कुमारोवि मज्जणभोयणाइसम्माणे पुच्छिओ बंधुमईसमाणयणवइयरं नरवइणा, कुमारेण वि भणियं-देव ! सव्वं बंधुमई तुम्हाण एव निवेयइस्सइत्ति, तओ सप्पुरिसो एस न अत्तणो चरियं सयमेव कहिस्सइत्ति विसज्जिओ रण्णा, गओ तेण चेव समप्पाविए महल्लपासाए कुमारो । इओ य--रयणीए सिग्घमेव विसज्जिऊण अवसरं गओ राया बंधुमईसमीवं, दिट्ठा य सा तेण, कहं ?, विसंठुलंगी विक्खित्तंगोवंगवसणा ठिया बाहिं कुट्टिमतलंमि निवेसमाणी मयंकजुइं पवेढिया सव्वओ मुणालतंतूहिं अवगूढा अणेयहारलयाहिं उच्छाइया जलद्दाइं निक्खिच्चमाणी चंदणरसेहिं वीइज्जमाणा तालियंटेहिं विणोइज्जमाणी नाणासंकहाहिं निव्वविज्जमाणी हंससीयलमणिनिवहेहिं चुंबिज्जमाणी मत्थयंसि कणगप्पभाए संवाहिज्जमाणी

सयलपरियणेणं, तओ नरनाहमागच्छंतं दट्ठूण अभिमुहमागयाओ चंपयलयाकुसुमसोहाओ, तओ रण्णा पुच्छियं--किमेयं ?, ताहिं भणियं--देव ! अत्थि ताव अज्ज आगया बंधुमई, तीय आगयमित्ताए अम्हाण कहिओ अप्पणो अवहरणसमाणयणवइयरो सव्वो, रण्णा, भणियं-केरिसो पुण सो ? तमेव ताव सोउमिच्छामो, तओ जहा सा मणिकिरीडेण अवहरिया कुमारेण जहा समाणीया वेयड्ढं च जहा गया तहा सव्वं कहियं ताहिं रण्णो, तओ राइणा भणियं·पुरओ कहेह, तओ ताहिं भणियं-देव ! तयणंतरं बंधुमईए मज्जणभोयणाइयं कयं, तओ खणमेगं सुत्ता, इओ य-सूरत्थमणाओ आरब्भ अप्पणो दाहवेयणं कहेइ एसा, तस्स य इमे उवयारा अम्हेहिं समारद्धा चिट्ठंति, तओ रण्णा भणियं-किं पुण वत्थाए दाहकारणंतिलक्खियं तुब्भेहिं किंपि ?, ताहिं भणियं-देव ! पंथपरिस्सम एव लक्खिज्जइ, ता पसायं काऊण विजणं करेउ देवो, पंथपरिस्समे अवगए पभाए कुमारीवि आरोग्गा भविस्सइत्ति न किंपि असंतोसो कायव्वो, अन्नं च पुणो इमीए सरूवं विण्णविस्सामो देवस्स, तओ राइणा चिंतियं- वयं ताव वत्थाए समीवे अवहरणाइवइयरं किर पुच्छिस्सामो, सो य एयाहिं चेव कहिओ, वत्था य दाहवेयणाए संपयं असंकुडा चिट्ठइ ता नियत्तामो वयंति संपहारिऊण सम्मं वत्था पडियरियव्वत्ति भणिऊण गओ राया वासभवणं, तओ बीयदिणे किंपि पविरलभूए परियणम्मि भणियं चंपयलयाए-सामिणि! पसायं काऊण कहेहि किं पुण ते वाहइत्ति, तत्तो बंधुमईए भणियं-पियसहि! अईव महंतो दाहो, तओ इयरीए भणियं-किं पुण कुमरि ! तस्स कारणं लक्खिज्जइ किंपि ?, तीए भणियं-पियसहि ! न किंपि तहाविहं तुम्ह कहणजोग्गं, तओ चंपयलयाए भणियं-सामिणि ! अहं लक्खेमि किंपि कारणं, परं जइ अपसायं न करेसि ता विण्णवेमि, तओ बंधुमईए भणियं-पियसहि ! न एवं वत्तुमरिहासि, जओ नियपाणेहिंतोवि अब्भहिए निच्चमेव हियक्कभासणरए जणंमि को किर अपसाओ ? तो भणसु वीसत्थं, तओ चंपलयाए भणियं-जइ एवं तो हिययवल्लहि

लक्खियं मए खित्तपालसंतिओ एस दोसो, ततो ईसिं विहसिऊण भणियं कुसुमसोहाए-कहं पुण तुममेयं लक्खेसि ?, तआ चंपल-याए अभिहियं-सहि! कल्लेऽवि नयरप्पवेसे सामिणीए दिट्ठीभावेण मए निच्छियमिणं, तओ झडत्ति हसिऊण परंमुही ठिया बंधुमई, चिंतेइ य-अहो वियड्ढो मे सहियणो, किमेयस्सवि गोविज्जइ, ततो चंपलयाए भणियं-सामिणि ! पसायं काऊण एत्तियं कहेह, एस एरिसो दाहो तुम्हाणं संपयं चेव जाओ किंवा परओवि आसी ?, तओ बंधुमईए दिट्ठिक्खेवेण ऊसारेऊण सेसपरियणं कण्णमूले होऊण भणिया चंपलया-पियसहि ! मुणियनीसेसभावत्थाए किं तुज्झवि किंपि गोवणिज्जं ?, धवलकूडपव्वयाओ आरब्भ एस दाह-वइयरो, किंतु एत्तियकालं आसाजललवेहिं सिंचितो न फुडीहूओ, कल्ले पुण सूरत्थमणसमए कस्सइ सयासाओ मए निसुयं, जहा सो सुहओ संपयं चेव अप्पणो अम्मापिऊणं अंतियं गमिस्सइ, तओ आसामित्तस्सवि वोच्छेयहेऊणा जलणजालासहस्सब्भहि-एण इमेण वयणेण पयडीहूओ एस महादाहो मज्झ, तओ चंपयलयाए भणियं-जइ एवं तो लद्धं चेव मए तुम्ह दाहस्स पसमणोसहंति, तओ बंधुमईए ऊससिऊण भणियं-कहेहि पियसहि ! किं तं ?, इयरीए संलत्तं-कुमरि ! आयण्णसु अवहिया होउं, अत्थि इहेव नंदिउरे पुरंदरकुमारस्स अईववल्लहो सव्वकलाकुसलो मज्झवि अईव सुपरिचिओ सुललिओ नाम रायपुत्तो, सो य अज्ज सूरुग्गमणसमए जाव य कुमारसमीवं उवगओ ताव दिट्ठो तेण कुमारो रहिओ परियणेणं निसन्नो य सयणिज्जंसि नीससंतो दीहुण्हं निरत्थयमेव निज्झायंतो पासाइं चिंतियंतो खणमेगं किंपि हियएण अणालवंतो पासट्ठियंपि वल्लहजणं अचेयंतो नियकरणिज्जसमयाइविभा-गं, तओ संभंतेण सुललिएण पणामं काऊण भणियं-सामि ! किमेयं ?, कुमारेण भणियं-न याणामि किंपि, केवलं सूरत्थमणाओ आरब्भ मम विसीयंति अंगाइं विप्फुरइ संतावो जलइव्व भुवणं न सुहायंति जणुल्लावा पवियंभिया अरई समालिंगिओ अलिय-

चिंताए, किं बहुणा ?, सव्वहा सिलासमूहघडिओव्व अहं संजाओ कज्जाकज्जपरिण्णाणसुन्नो, तओ चलणेसु विलग्गिऊण भणियं सुललिएण-तुह कुसलायत्तं सामि ! जीवियं एत्थ किंकरजणम्मि । तो काऊण पसायं कहेसु जो इत्थ परमत्थो ॥ १ ॥ भुवणेविहु अक्खलिया किह मुज्झइ एत्तिएवि तुह बुद्धी । नहि मंडएसु भुल्लइ गोहूमे गणइ जो पुरिसो ॥२॥ अहो एयस्स भत्ती अहो वयणविण्णासो तो जुज्झइ मज्झ परमरहस्संपि निवेइत्तएत्ति चिंतिऊण भणियं कुमारेण-जइ एवं तो निसामेहि भो जो एत्थ परमत्थो,जद्दियहाओ निसुया वन्निज्जंती गुणेहिं बंधुमई। तद्दियहाउवि तीए मह हिययं सव्वहा हरियं ॥१॥ पच्चक्खं पुण दिट्ठाएँ तीएँ जं ववसियं मह सरीरे । तं कहिउंपि न तीरइ किमंग पुण अप्पणा सहिउं ? ॥२॥ तो जइ पत्थेमि तयं नरनाहं तो फुडं जणो भणइ । सुयणत्तेण न एसा नियत्तिया किंतु लुद्धेण ॥३॥ पत्थिज्जंतो य निवो तं देइ न वात्ति तंपि को मुणइ । मं इच्छइ निवतणया नवात्ति एयंपि दुन्नेयं ॥३॥ अवहरणं पुण तीसे ससिविमलं मह कुलंपि मइलेइ । जइ पुण ताओ चित्तं कहवि नियत्तेमि खणमेगं ॥ ४ ॥ ताव य वंमहसवरो देइ वहं मज्झ माणसवणम्मि । दट्ठुं अम्मापियरे चित्तं च समूसियं मज्झ ॥५॥ इय चिंताभरसंघट्टविहुरिए मज्झ हयसरीरम्मि । सा वट्टेइ अवत्था जा नूण रिऊणवि न जुत्ता ॥६॥ एत्थंतरम्मि मज्झ पवंचणनिमित्तं सव्वं आलियमेयंति सविसायाए सच्चंपि कयाइ होज्जत्ति सहासिाए भणियं बंधुमईए-पियसहि ! कहं पुण तुमए विण्णाओ एस वइयरोत्ति?, तओ चंपलयाए भणियं-सामिणि ! आयण्णसु कहेमि, अत्थि ताव अहं अज्जप्पभाए तुह समीवे आगन्तुं नियगिहाओ संचलिया, मज्झ य एत्थ आगच्छंतीए कुमारसंतिओ आवासो मग्गे चेव, तत्थ य पविसंतो दूराओ दिट्ठो मए सुललिओ, तेण य मज्झ किंपि पओयणं आसि, तओ तस्स पिट्ठओ अहं पविट्ठा तत्थ, आसन्नं च गंतूण जाव कुड्डंतरिया चिट्ठामि ताव परोप्परं तेसिं एसुल्लावो सव्वोऽवि मए निसुओ, तं च सोऊण पियचंद-

जुण्हाचउरिव्व दिट्ठा तुज्झ कहणनिमित्तं समूसिया निग्गया अहं तत्तो, निग्गच्छंतीए य दिट्ठो तत्थ पविसंतो मइविलासो नाम देवस्स संतिओ पहाणमहंतओ, एत्थ य तओ अहं समागया, इओ तत्थ पुरओ किंपि संजायंति न याणामि; तम्हा सिद्धमेवेदं सामिणि! पओयणं, न एत्थ वियप्पो कायव्वो, जओ—"कण्हं मोत्तूण सिरी मोत्तूणं चंदसेहरं गोरी। मयणं मोत्तूण रई कस्स कए निम्मिया विहिणा?॥१॥एत्थंतरे केणइ भणियं-एसवि अणुरूवो संजोगो सिद्धो चेव य मंतव्वोत्ति, तओ भणियं सव्वाहिवि-अहो सोहणं निमित्तं, भवइ चेव एतेण कज्जसिद्धी,एयम्मि अंतरे सहसत्ति पियंगुमइनामाए बंधुमईकणिट्ठभगिणीए समागंतूण भणियं, जहा वद्धाविज्जह तुम्हे, इओ पंचमदिणे बंधुमईए विवाहो भविस्सइत्ति, तओ विम्हियाहिं सव्वाहिवि परोप्परं बंधुमईएवि न मज्झ इत्तियाइं पुण्णाइं जेण तस्सेव हिययवल्लहस्स दिन्ना होज्जामित्ति संजायहिययधसक्काए मइविलासस्स य तत्थ गमणाइवइयरसवणओ संजायसच्चसंभावणाए अवलंबिओ खणमेगं मोणभावो, तओ कुसुमसोहापमुहाहिं भणियं-पियंगुमई! कहं पुण तुमए एयं विण्णायंति?, तीए भणियं-आयण्णह कहेमि, अत्थि ताव पभाए तुम्हाण सयासाओ गया अहं तायस्स चरणे दट्ठुं, जाव य तत्थ वच्चामि ताव मइतिलयस्स महामंतिणो वाहाए विलग्गो वच्चइ ताओ मंतहरं, पणमिओ मए, अंगुलीलग्गा य गया अहंपि मंतहरं, अइवल्लहयाए य न ओसारिया दूरं, ताएण उचियप्पएसे उवविसिऊण भणियं, जहा-भो मंतिवर! जीवियं जेण दिन्नं अम्हाण तस्स सिरिविजयसेणरायतणयस्स भणसु को पडिउवयारो जुत्तोत्ति?, तओ मंतिणा भणियं-देवो चेव एत्थ पमाणं, न एस अम्हारिसाण विसओ, तओ ताएण भणियं-जइ एवं तो मज्झ एस अभिप्पाओ-जं अम्हाणं जीवियाओवि अब्भहिया बंधुमई सा इमस्स चेव विवाहणत्थं दिज्जइ, अणुरूवो य एस संजोगो सयलबहुजणमओत्ति, तओ मंतिणा भणियं चारु मंतियं देवेण, को देवं मोत्तूण

अन्नो उचियमवगच्छइत्ति ?, तओ ताएण सिक्खं दाऊण मइविलासो नाम मंती पेसिओ कुमरवरस्स समीवं, गओ य सो तत्थ, कया य कुमारेण उचियपडिवत्ती, तओ भणियं तेण-कुमर! तुम्ह समीवे देवेण पेसिओऽहं, एयं च भणियं, जहा भुवणेऽवि अन्नो जं विहेउमसमत्थो तं तुम्हेहि कयं अम्हाण महंतं पियं, संपयं पुण अम्हाण चेव अब्भत्थणाए किंपि काउं अरिहइ कुमारो, ततो नरवइनंदणेण भणियं--भणह निव्वियप्पं जं देवो आणवेइ, तओ मइविलासेण भणियं-जइ एवं तो देवस्स नियजीवियाओवि अब्भहियं बंधुमइं पाणिग्गहणेण पवित्तीकरेउ कुमारो, तओ अवलोइयं पासवत्तिणो सुललियरायपुत्तस्स मुहं, तओ तेण भणियं-कुमार! सिरिविजयसेणरायनिव्विसेसो अलंघणिज्जो सया तुम्हाण देवो, ता कीरउ एसावि देवस्स पत्थणा सफलत्ति, तओ कुमारेण भणियं-जइ एवं तो किंपि तुमं जाणसित्ति, तओ महापसायंति भणिऊण समुट्ठिओ मइविलासो. समागओ य मज्झ तत्थट्ठियाए चेव तायसमीवं, कहियं च सव्वं पुव्वुत्तं, तओ हक्काराविओ ताएण नेमित्तिओ, कहियं च तेण-इओ पंचमदिणे सोहणं परिणयणमुहुत्तं, तओ धाराहयकयंबपुप्फंव हरिससमुद्धुसियसरीरा समागया अहं तुम्ह समीवे निवेयणत्थं, एवं च मए इमं विण्णायंति, तओ कणगप्पभाए पहट्ठचित्ताए भणियं-अहो अविसंवाइत्तणं निमित्तस्स, तओ कुसुमसोहाए भणियं-देवि! दिव्वा खलु एसा उप्पाइया भासा, न अन्नहा परिणमइ, तओ चंपयलयाए भणियं-बंधुमई! सिद्धं तुम्हाण समीहियं, पत्तं दाहवेयणाए पसमणोसहं, ता उट्ठिऊण अणुट्ठिज्जंतु सरीरसक्काराइपओयणाइं, तओ हिययंमि परमपमोयसागरमवगाढाएवि बंधुमईए वामसीलत्तणेण मयणस्स मुहे भिउडी काऊण भणियं सव्वासिं अभिमुहं होऊण इमाए-अलिएक्कभासणनिउणाउ सव्वाओवि तुब्भे ममं पवंचेह, सीसंपि मे दूमेइ इमिणा असंबद्धप्पलावेणंति भणिऊण कयं वेगेण पराहुत्तं मुहं, तओ सणियं हसिऊणं चंपयलयाए भणियं-सामिणि! मा एवं

भणेह, न एयं मणागंपि अलियं, फलेहिं चेव य अवगच्छिस्सइ इमं सामिणीए, एवं च तत्थ उल्लावे वट्टमाणे समागयाओ रायनिउत्तसोविदल्लाओ, ताहिं भणियं-कुमरि ! देवो आणवेइ जहा पच्चासन्नो विवाहो, कीरंतु सरीरसक्काराइं मंगलाइं, ता पसायं काऊण उट्ठेह, तओ समुट्ठिया बंधुमई , संपलग्गो य नियनियनिउत्ताहिगारेसु सयलपरियणो, समागओ य कमेण विवाहदिवसो, परिणीया य महाविभूईए पुरंदरकुमारेण बंधुमई, दिन्नं च राइणा तीसे सुबहुं हिरण्णाइ दविणजायं, कुमरस्सवि दिन्नाओ दसकोडीओ सुवन्नस्स दससहस्साइं करिवराणं दससहस्साइं रहवराणं लक्खं तुरंगमाणं दोन्नि कोडीओ पाइक्काणं बहुगामनगरसमाइण्णो महंतो य विसओ दिन्नो, सम्माणिऊण विसज्जिया माणिकिरीडाइणो, तओ बंधुमईए सह पंचविहं विसयमणुहवंतस्स वच्चंति कुमरस्स दिवसाइं, तियचउक्कचच्चरुज्जाणाइसु नाणाविलासेहिं कीलंतं पासिऊण कुमरं पमुइयचित्ताणं पउरलोयाण पयट्टंति सव्वत्थ समुल्लावा, जहा-सो कत्थ कासिविसओ ? कत्थ पुणो एरिसं च वरनयरं? । विज्जाहरेहिं हरियावि कत्थ विणियत्तिया बाला? ॥१॥ कह उप्पज्जइ एसा बुद्धीवि नराहिवस्स अणुकूला । अहवा कयबहुपुण्णाण होइ सव्वंपि अणुकूलं ॥ २ ॥ हढकड्ढियवेरिसिरीविहियनिवासे इमस्स पाणिम्मि । जीसे करो विलग्गो बंधुमई सच्चिय कयत्था ॥ ३ ॥ इय तोसियसयलजणो बंधुमईए सुहं सुहेणेसो । चिट्ठंतो अइबहुयं गयंपि कालं न याणेइ ॥ ४ ॥ अह अन्नया कयाई वरसुहडनिरंतरम्मि अत्थाणे । उवविट्ठो विण्णत्तो पडिहारेणं निवंगरुहो ॥ ५ ॥ सिरिविअयसेणनरनाहपेसिओ चउरवयणनामोत्ति । दारे पुरिसो चिट्ठइ को आएसो हवउ तस्स ? ॥ ६ ॥ सिग्घं मुंचह भणिए इमेण मुक्को खणेण संपत्तो । उवलक्खिऊण सहरिसमवगूढो तो स कुमरेण ॥७॥ दिण्णासणो वइट्ठो कुसलपउत्तिं च पुच्छिओ सव्वं । सिरिविजयसेणनरवरनियजणणीपमुहलोयस्स ॥८॥ पुट्ठेण तेण भणियं कुसलं सव्वंपि तुज्झ पिउगेहे ।

एयं चेव अकुसलं जं दीससि तं न नयणेहिं ॥ ९ ॥ जद्दियहाउ च्चिय निग्गओ सि तं कुमर! नियनयरीओ । तद्दियहाओ नूणं सुहंपि तत्तो विणिक्खंतं ॥ १० ॥ तुह विरहम्मि रुयंतीएँ कुमर ! देवीएँ कमलमालाए । नज्जइ महासमुद्दो संकंतो नयणजुयलम्मि ॥ ११ ॥ दीहं नीससइ खणं सुन्नं जंपेइ रुयइ खणमेगं । एमाइ तुज्झ विरहे दुक्खं रायावि संपत्तो ॥ १२ ॥ तं नत्थि किंपि ठाणं जत्थागविट्ठो सि तं न पुहईए । चारपुरिसेहिं रण्णो परं न सुद्धीवि तुह लद्धा ॥ १३ ॥ इण्हिं पुण वणिएणं समुद्ददत्तेणिमाउ नयराओ । तत्थागएण कहिया तुज्झ पउत्ती इमा सव्वा ॥ १४ ॥ तुह कुमर! आणणत्थं तत्तो देवेण पेसिओ अहयं । तो काऊण पसायं आगच्छह तत्थ अइतुरियं ॥ १५ ॥ अह कइवयदिणमज्झे तत्थ न पत्तो सि जइ तुमं कहवि । तो मन्ने जीवंते अम्मापियरे न पिच्छिहिसि ॥ १६ ॥ इय एवमाइ सोउं चिंतइ वज्जाहओव्व तो कुमरो । पिच्छह जाएण मए जायं पियराण जं सोक्खं ॥ १७ ॥ नियजीवियदाणेणवि उवयारो दुक्करो जए जेसिं । ताण मए पियराणं अणोरपारं कयं दुक्खं ॥ १८ ॥ एमाइ चिंतिऊणं घित्तुं बाहाए चउरवयणंपि । संपत्तो तो कुमरो सिरिसूरनरिंदपासम्मि ॥ १९ ॥ कहियं च तयं सव्वं पच्चक्खं दंसिओ य सो पुरिसो । सह सव्वसमिद्धीए बंधुमईए य तो कुमरो ॥ २० ॥ सम्माणिऊण रण्णा विसज्जिओ जाणिऊणुचियसमयं । अइनेहनिबंधेणवि विहिओ न असग्गहो तेण ॥ २१ ॥ ( जुयलं ) अणवरयपयाणेहिं पत्तो कुमरो तओ नियपुरीए । चउरवयणोऽवि गंतुं पुरओ वद्धावए रायं ॥ २२ ॥ तो अभिमुहो नरिंदो सव्वसमिद्धीएँ आगओ तस्स । सह बंधुमईए तओ पणओ कुमरोवि निवइस्स ॥ २३ ॥ अह नेहनिब्भरेणं तत्तो अवगूहिऊण नरवइणा । आरोविओ गइंदे बंधुमईए समं कुमरो ॥ २४ ॥ वीइज्जंतो सियचामरेहिं सिरि धरियधवलवरछत्तो । पविसंतो नयरीए पियाए सह गयवरारूढो ॥ ५५ ॥ सुरकरिसंठियरंभासामयसुरपहुसिरिं विडंबंतो । पउरजणेणं कुमरो सलहिज्जइ विवि-

हवयणेहिं ॥ २६ ॥ तथाहि कश्चिदाह-पेच्छह एगागी निग्गओवि कं वित्थरं गओ कुमरो ?। अहवा भवंतरऽज्जियसुहाण किर कि-
त्तियं एयं ? ॥ १ ॥ जम्मंतरपरिसंचियसुहगुणसंदाणिया खणं लच्छी । रण्णे घरे विदेसे न मुयइ पिट्ठिं सुपुरिसाण ॥ २ ॥ अपर-
स्त्वाह-बंधुमइच्चिय धन्ना इमेण जायापयंमि जा ठविया । न हि मरगयमणिजुग्गं पावइ सव्वावि हारलया ॥ ३ ॥ अन्यस्त्वे-
तस्य स्पर्द्धया आह-कुमरोवि कयत्थोच्चिय बंधुमई जस्स गेहिणी जाया । मरगयमणीवि मुत्तावलीए जं न घडइ सव्वो ॥ ४ ॥
एमाइ थुणिज्जंतो पत्तो कुमरो गिहम्मि मिलिओ य । नियजणणीपमुहाणं पमुइयचित्ताण बंधूणं ॥ ५ ॥ कहियं पियराणमिणं
भमिओऽहं देसदंसणिच्छाए । अणुभूयं जं च तहिं निवेइयं तंपि कुमरेण ॥ ६ ॥ अह कुमरपुण्णवसओ कासीविसओ पवड्ढए अहियं ।
हरिसेण संपयाहि य एवं च गओ बहू कालो ॥ ७ ॥ अह अन्नया पयट्टो हेमंतो घणतुसारवरिसेण । भुवणंपि निद्दहंतो खलोव्व
दुव्वयणनियरेण ॥ ८ ॥ हिमदूमियम्मिवि जए लच्छिं दट्ठूण कुंदकुसुमाणं । जत्थ मुणिज्जइ एवं सुद्धाण खलावि न फुरंति ॥९॥
घणघुसिणतिल्लरल्लयदहणाई जत्थ गारवं पत्ता । होइ च्चिय गारविओ जं सीयलयाण पडिवक्खो ॥१०॥ हारजलचंदचंदणसीयल-
वत्थूणि जत्थऽणिट्ठाणि । नियपक्खं चिय पढमं हणइ जडप्पा सिरिं पत्तो॥११॥ जत्थ खलसंगयाइं व दूरं हाणिं गयाइं दियहाइं ।
सज्जणमित्तीओ इव विद्धिं पत्ताउ रयणीओ ॥ १२ ॥ सूरस्सवि परिहायइ तेओ पइदियहमेव जत्थऽहवा । हवइच्चिय नित्तेओ
धावंतो दक्खिणादिसाए ॥ १३ ॥ पीणपओहररिपियकामिणीण सरिऊण पहियनिवहेहिं । जत्थ नियत्तिज्जइ दूरओवि हिमफंस-
भीरूहिं ॥ १४ ॥ हिमसेलसिलाकयविब्भमेसु सिद्धाण माणसं जत्थ । हिमपिंडीभूयसरोवरेसु अभिरमइ खणमेगं ॥ १५ ॥
मज्झिमरयणीसु दरिद्ददंतवीणाझुणीहिं जग्गविया । धणिणोवि जत्थ निद्दं पुणोऽवि किच्छेण पावंति ॥ १६ ॥ मासं जुग्गाहा-

रेण जेण महालोद्धएण व वणेसु । जीयंपिहु अवहरियं थलखयहरजंतुलक्खाणं ॥ १७ ॥ इय सिसिरपवणकंपिरनीसेसजणंसि तम्मि हेमंते । उज्जाणपालएणं राया गंतूण विन्नत्तो ॥ १८ ॥ सुरमणुयभसलसेवियपयकमलो सोमयाए सियकिरणो । भाणुव्व केवलालोयपयाडियासेसभुवणयलो ॥ १९ ॥ मुणिविंदपरिक्खित्तो समागओ कोवि मुणिवरो एत्थ । उज्जाणे सुरनिम्मियसुवन्नकमलम्मि उवविट्ठो ॥ २ ॥ लोयस्स कहइ धम्मं वसइ य जो कोइ एत्थ नयरम्मि । सो सव्वोऽवि पयट्टो वंदणवडियाए तस्सेव ॥ २१ ॥ इय सोउं परितुट्ठो राया परिओसदाणमेयस्स । दाऊणं संचलिओ सव्वसमिद्धीए तत्थ सयं ॥ २२ ॥ अंतेउरं कुमारो सामंता मंतिणो पुरजणो य । तत्थ कमेणं पत्ता सव्वं दिट्ठो य मुणिनाहो ॥ २३ ॥ ततश्च दूरादेव तस्मिन् मुनीश्वरे दृष्टिपथमवतीर्णे नरपतिरवतीर्णः करिवरात् समवतारितो मुकुटः पराकृतानि चामराणि अपसारितं छत्रं समुज्झितानि खड्गादिप्रहरणानि परिहृते पादुके विसर्जितं ताम्बूलं विहितं च चरणादिषु जलशौचं निवर्त्तित उत्तरासंगः, ततो गुरुहर्षसमुल्लसद्बहुलरोमाञ्चः सपरिकरः प्रवृत्तो मुनीन्द्राभ्यर्णमभिगन्तुं, गच्छता च तत्र मार्गानतिदूरवर्त्तिषु प्रदेशेषु दृशं व्यापारयता दृष्टाः साधवः पूर्वोक्तस्वरूपे हिमकणप्रवर्षिणि पतत्यतिमहाशीते रहिताः प्रावरणेन रूक्षाः शरीरेण अपचिता मांसशोणितेन उपचितास्तपस्तेजोनिचयेन निरस्तनगपतयो निष्प्रकम्पत्वेन जितजलधयो गाम्भीर्येण विनिर्मुक्ता दैन्येन अधिष्ठिताः केवलसत्त्वेन स्थिताः केचिदुत्कटुकासनेन केचिद् गोदोहिकया केचिद्वीरासनेन केचिल्लगण्डशायितया अन्ये गरुडासनेन अन्ये दण्डायततया अन्ये मयूरासनेन अन्ये त्वेकचरणावष्टम्भेनोर्ध्वबाहुतया अपरे मण्डूकासनेन अपरे पद्मासनेन अपरे कच्छपासनेन अपरे तु प्रलम्बितबाहवो रूक्षपुद्गलनिविष्टनिर्निमेषदृष्टितया, ततो हर्षकृपाभक्तिभरसमाकुलितचेताः क्रमेण पुरतो गच्छन्नरेन्द्रः चन्द्र-

मिव तारागणेषु अमराचलमिव शैलेषु कल्पपादपमिव द्रुमेषु चिन्तामणिमिव रत्नोपलेषु शचीपतिमिव विबुधेषु राजहंसमिव द्विजेषु अमरसिन्धुरमिव करिकलभेषु महामृगेन्द्रमिव हरिकिशोरकेषु वाचनाप्रच्छनापरावर्त्तनादिप्रवृत्तमुनिवृषभवृन्दानुगतं भक्तिभरप्रेरितविबुधविद्याधरनरशिरोऽटभ्रमरनिकुरम्बचुम्ब्यमानचरणारविन्दयुगलं विमलकेवलालोकावभासितनिःशेषभुवनत्रयं कनकगिरिशिखरनिषण्णविहगराजामिव सुवर्णकमलोपरिव्यवस्थितं विशेषतोऽपि मुनीन्द्रमद्राक्षीत्, तं दृष्ट्वा च वारत्रयं प्रदक्षिणीकृत्य परमानन्दविगलद्बहलबाष्पाम्भःप्रवाहपरिसिक्तमुनीश्वरचरणपंकजं प्रणम्य च सपरिजनः समुचितप्रदेशे निषण्णः क्षितिपतिः, कृता च भगवता मुक्तिसुखाभिलाषभवनिर्वेदजनयित्री सद्धर्म्मदेशना, ततो लब्धावसरेण विनयनम्रमूर्ध्ना प्रोक्तं क्षितीशेन यथा-भगवन् ! निःशेषसन्देहदहनप्रशमननीरपूरायमाणज्ञानाद्भगवतः पृच्छामि किंचिद्, यथैतेऽत्र समागच्छता मया ये दृष्टाः साधवस्ते वर्त्तमाना अपि नवयौवने युक्ता अप्यनुत्तररूपेण समालिंगिता अपि लावण्यलक्ष्म्या अवगूढा अप्यतीवसुकुमारतया प्रपतत्येवंविधे महाशीते किमित्येवंभूतान्यनावरणतादीनि दुःसहकष्टानि सहन्ते?, को देशः किं च कुलं पवित्रितममीभिरिति?, ततो मुनीश्वरेणोक्तम्—महाराज ! महतीयं कथा सव्याक्षेपाश्च भवन्तस्तत् किमत्रोच्यते ?, ततो महीपतिनाऽभ्यधायि-नैवं आदिशन्तु भगवन्तो, न हि मन्दोऽपि स्वाधीनममृतं परित्यज्य गरलपानाय स्पृहयति, तस्माद्विधाय प्रसादं पवित्रयन्तु पूज्याः पीयूषवर्षकल्पेनामीषां निर्म्मलचरितश्रवणेन अस्मदीयं श्रवणयुगलम्, ततो मुनीशेन प्रोक्तं-यद्येवं तर्हि सावधानैर्भूत्वा समाकर्ण्यतामिदमिति, अस्ति तावत् सङ्केतः समस्तकौतुकानां सर्वतः समाकीर्णा विलसदनन्तलोकैः कुलनिकेतनं निःशेषसम्पदां परमास्पदमपरिशेषाद्भुतानां, किं बहुना?, निवासः सर्वसत्कर्म्मणां, अनाद्यनन्तो नाम जनपदो, व्यतिकरकोट्याकीर्णं भवस्वरूपं वदन्ति येन

मुनयः, एतज्जनपदतत्त्वं त एव सर्वं विजानन्ति, तदन्तर्गतं च समस्त्यवनितलं नाम नगरं, तच्च वलयितं सर्वतो वज्रविरचितवेदिकापांशुप्राकारेण परिगतं सर्वतः समुद्रगम्भीरपरिखावलयेन शोभितं नराधिपधामधवलसौधपङ्क्तिभिः प्रविराजितं विचित्रविपणिमार्गैराकीर्णं कर्केतनादिनिःसङ्ख्यरत्नकोटीभिः, किं बहुना?, पृथ्व्यां ये गुणाः केचित् सम्भाव्यन्ते मनीषिभिः ते सर्वेऽप्यत्र वक्तव्या नगरे वक्तुमीप्सिते, तत्र चादृष्टसञ्चयो नाम राजा यः क्षितीशानपि रंकयाति रङ्कानपि क्षितीशयाति अमरानपि गर्द्दभयति गर्द्दभानप्यमरयाति मनुजेन्द्रानपि नारकयति नारकानपि मनुजेन्द्रयति द्विपेन्द्रानपि कीटयति कीटानपि द्विपेन्द्रयति ईश्वरानपि दरिद्रयति दरिद्रानपीश्वरयति सुखितानपि दुःखयति दुःखितानपि सुखयति, किं बहुना?, यथाऽविचिन्त्यसामर्थ्यो, विदितः कर्म्मसञ्चयः, एवमेषोऽपि विज्ञेयो, येनैक्यं तत्त्वतोऽनयोः॥१॥ तस्य च राज्ञो भवानी भवस्येव प्रिय दाक्षिणदेहार्धवासिनी शुभपरिणतिनाम्नी राज्ञी, सा च समस्तत्रिभुवनैकहिता अनन्तगुणरत्नरोहणभूमिः, तथाहि-जन्तूनां योग्यतामपेक्ष्य जनयति केषांचिदिष्टयोगान् करोत्यनिष्टविप्रयोगान् प्रथयति सौख्यानि मथयति दुःखानि विस्तारयति श्वेतांशुशुभ्रं यशो निस्तारयति निःशेषव्यसनेभ्यो धारयति स्वर्गादिस्थानेषु वारयति नारकादिषु जन्म पूरयति समस्तमनोरथान् चूरयति प्रतिपक्षसार्थान्, अतीव परितुष्टा पुनरेषैव देवी प्रापयत्यपरिशेषविष्टपाधिपत्यं किंकरयति शक्रान् कर्म्मकरयति चक्रवर्त्तिनः पदातिवर्ग्गयति सुरसमूहान् परिणमयत्यष्टमहाप्रातिहार्याणि, यदिवा किमेतैर्विस्तरालापैः?, निर्विशेषैव सा राज्ञी, पुण्यप्रकृतिसहतेः। ततो लोके शुभं यत् स्यात्, तत् सर्वं तत्प्रसादतः ॥ १ ॥ अपरापि तस्य महीपतेः कामस्य रतिरिवातीव वल्लभा वामार्द्धवपुर्वासिनी अशुभपरिणतिर्नाम पत्नी, सा च भीषणा स्वरूपेण क्रूरा स्वभावेन दुष्टा हृदयेन कृतघ्ना प्रकृत्या प्रचण्डा व्यापारेण भुवनाभ्यन्तरवर्त्त्यशेषलोकप्रतिकूला निःशेषदोषोपलपटलशैलेशलीला,

एषा हि देवी प्रकुपिता जन्तूनामुदीरयति दुःखलक्षाणि जनयति बहुविधव्याधीन् समुज्ज्वलयति वह्निज्वालाधिकानाऽऽधीन् ददाति सर्वदुःखप्रदं दारिद्र्यं विफलयति मनोरथवल्लरीप्रतानानि सफलयति व्यसनपादपपटलानि भ्रंशयति सन्मार्गात्, अतिप्रकुपिता पुनरसौ राज्ञी समुत्क्षिप्य प्रक्षिपत्यनन्तभवगंभीरसागरे, तत्र च भ्रमयत्यपरिमितश्वभ्रधःस्थानेषु क्षेपयति वज्रशूलासु ताडयति मुद्गरादिघातैः त्रोटयति वज्रवक्रपतत्रिभिः पाटयति करपत्रैः प्लोषयति तीव्रपावकैः सेधयति बुभुक्षया शोषयति पिपासया विनाटयति मत्स्यसूकरशकुंतादिभावैः विडम्बयति मातङ्गादिरूपैः कारयति धनमदमलिनेश्वरमन्दिरेषु कुकर्म्माणि विगोपयति हीनत्रिदशरूपतया दर्शयति दैन्यानि प्रकटयति परिभवसन्तानानि, किमिह बहुप्रकारेणोक्तेन?, निर्विभेदैव सा बाला, पापप्रकृतिसन्ततेः। ततो लोकेऽशुभं यत् स्यात्, तत् सर्वं तत्प्रभावतः॥१॥तत्र च शुभपरिणतेः कलानां पारगाः शूराः सद्रूपाः प्रियवादिनः लावण्यनिधयः शान्ताः सम्प्राप्ताद्भुतकीर्त्तयः सम्पत्तावप्यनुत्सेकाः विपत्स्वप्यविषादिनः देवतागुरुपूजासु सर्वदैवाप्रमादिनः विनयैकरसा दक्षा वत्सलाः सत्यवादिनः, किंवा बहूक्त्या?, निःशेषगुणरत्नाम्बुराशयः समुत्पन्ना विमलबोध-शमजलधि-विश्वगुण-विश्वम्भर-कीर्त्तिधर-यशोनिधि श्रेयोरति-पुण्यमानसादिनामानो बहवः पुत्राः । अशुभपरिणतेरपि विपर्यस्ताः शठाः क्रूराः, सन्तोषपरिवर्जिताः । परोपतापिनः पापाः,पापिष्ठजनसङ्गताः॥१॥असत्प्रलापिनो लुब्धा गुरु(२०००)देवविद्वेषकाः,परविद्वेषिणो धृष्टा,विशिष्टजननिन्दिताः॥२॥ अलीकस्वगुणारोपगर्विताः सत्यवर्जिताः।ये दुर्जनेषु गीयन्ते, तैर्दोषैरखिलैर्युताः ॥३॥ सञ्जाताः कलुषबोध-पापरति-कल्मषाकर-भवानुबन्ध-भवनन्दि-दुरध्यवसाय-निर्द्धर्म्म-वृजिनाद्यभिधाना बहवस्तनयाः। ते चोभयेऽपि संहिताः क्रीडन्ति विचित्रक्रीडाभिः परिभ्रमन्त्यारामनठोद्यानेषु ललन्ति तन्नगरनिवासिबहुजनोत्सङ्गेषु हरन्ति स्वजनहृदयानि मुग्धालापैः, ततः कलाग्रहणसमये समर्पि-

तास्ते सर्वेऽपि कलाचार्यस्य, अधीतं च सम्यक् शुभपरिणतिपुत्रैः, परैस्तु दुर्विनयोद्वाजिततया कलोपाध्यायस्य शठतया चित्तस्य प्रमादबहुलतया स्वभावस्य अकल्याणभाजितया चात्मनः प्रचुरपापव्यापाररतैर्न किञ्चित्तथाविधमधीतं, ततश्चान्यदा प्रतिभवानुगामिनी चिरप्ररूढप्रतिबन्धा स्वयंप्रक्षिप्तस्वयंवरमालिका तत्कालसकलजनप्रकटीभवद्विचित्रचरिता परिणीता सर्वैरप्येकैव भावितव्यताभिधाना भार्या, अत्रान्तरे विजयसेनक्षितिभृता चिन्तितं-अहो आश्चर्यं यदेतावतां सर्वेषामप्येकैव भार्या, यदिवा तिष्ठत्विदं, किमनेन ?, सर्वमप्येतच्चरितमाश्चर्यविधायकं सूरयः प्रसभमाचक्षाणास्तिष्ठन्ति, तदस्य तत्त्वं पश्चादेव निश्रेष्यामः, कथयन्तु सम्पूर्णं तावदिति विचिन्त्य प्रोक्तं भूपेन-भगवन्तस्ततः ?, ततः सकलसाधुवर्ग्गाधिपतिनाऽभ्यध्यायि-क्षोणीपते ! ततस्तेष्वभिमुखीभवति यौवने पदमाधित्सति तारुण्यजन्मनि विक्रियाकलापे प्रकटीभवत्सु भवितव्यताविलासेष्वकाण्ड एव अन्यदा मध्यव्यवस्थापितमोहचरटनायका अन्योऽन्यस्पर्द्धमानदर्प्पोद्धुरस्मरप्रचण्डताहङ्कारशाठ्यगृद्धिप्रकर्षद्वेषरागमदमत्सरादिमहाचरटवृन्दानुगता विकुर्वती नानारूपाणि भंजती बलिनामपि दर्प्पावष्टम्भान् मुष्णती समस्तदेशावस्थायिनिःशेषजनसन्मार्गप्रभृत्यादिसर्वस्वनिचयान् अपहरन्ती सज्जितानपि गजेन्द्रान् त्रासयन्ती तुरगव्रजान् अगणयन्ती सुभटसमूहान् प्रथयन्ती निजमाहात्म्यं अधःकुर्वती सुरेन्द्राणामपि प्रभावं विधुरयन्ती चक्रिणामपि सामर्थ्यं आकुलयन्ती समस्तं त्रिभुवनं पट्वी प्रबलमोहान्धस्वापदानेषु कुशला गुपिलानामपि विवेकतालकभङ्गेषु निपुणा निर्गमप्रवेशेषु दक्षा सुगुप्तेष्वपि परसर्वस्वापहरणेषु, किं बहुना ?, अतीवकृताभ्यासा ठगविद्यायां निपतिता तत्र नगरे महती मलिम्लुचधाटी, ततश्च तया प्रपूज्याऽतिशयवतीं ठगविद्यां लुण्टयितुमारब्धं समस्तमपि नगरं, अत्रान्तरे चिन्तितमेकयैव निरौत्सुक्यया भवितव्यतया-मम तावदाज्ञाकारिण्येवेयं वराकी तस्कर-

धाटी, जानामि चाहं सम्यगेतदीयविद्यायाः समस्तं प्रतिविधानं, केवलमेते पापिष्ठा अशुभपरिणतिपुत्राः स्वैरेव महादुश्चेष्टितैः सर्वेऽपि सर्वदैव ममातीव द्वेष्यास्ततो मुष्यंतां नामामी वराकाः अनया चौरधाट्या, नैषां किमपि रक्षोपायमहं चिन्तयिष्यामि, एते पुनरार्याः शुभपरिणत्यङ्गजन्मानः स्वकीयेनैव श्वेतांशुशुभ्रेण गुणकलापेन ममात्मीयप्राणेभ्योऽपि प्रेयांसस्तत् मया अमी अमुष्याः पश्यतोहरचौरसंहतेर्यत्नतो रक्षणीयाः, ते च केवलयैव मया रक्षितुं न पार्यंते, ततस्तद्रक्षणार्थं मीलयामि सामग्रीमिति विचिन्त्य स्थिता क्षणमेकं ध्याने, ततो दृष्टः कथमपि ततोऽदूरवर्त्तिनि कस्मिँश्चित्पुण्यप्रदेशेऽनुकम्पयन् समग्रप्राणिवर्गं यथावदुपदिशन्नि-र्वृत्तिपुरीमार्गं अग्रेसरः कारुण्यवतां प्रथमः परोपकारनिरतानां धुरि धर्म्मैकनिविष्टमानसानां आद्यो दान्तकरणग्रामाणां पूर्वः शमिनां मुख्यो योगिनां श्रेष्ठः पवित्राणां प्रधानं ज्ञानपात्राणां सारः सुविशुद्धब्रह्मचारिणां रूपवान् सुभगो वचस्वी दर्शनमात्रत एव शर्मं प्रापितप्राणिसार्थः समयराजो नाम कश्चिन् महापुरुषः, तं च दृष्ट्वा अतीव परितुष्टा भगवती भवितव्यता, भविष्यत्येतदीय-साहाय्येन मम कार्यसिद्धिरिति विचिन्त्य प्राप्ता क्षणार्द्धेन तत्समीपं, समानीतश्च समस्तोपायकुशलयाऽनया झगित्येव समयरा-जोऽवनितलनगरे, इतश्च तया तस्करधाट्या व्यामोहिताः सर्वेऽपि तावदशुभपरिणतिपुत्राः ठगविद्यया, उपनीताः प्रबलमोहनिद्रया प्रहर्षवतीमकिञ्चिज्ज्ञातां, तालोद्घाटनविद्यया समुद्घाट्य मुषितानि सर्वाण्यपि सद्बोधसमाधिधर्म्माभिरत्यादिनामकानि तदीयसर्वस्व-गृहाणि, आत्मवशतां चातीव नीत्वा बाढं वियोजिताश्चिरकालसम्बद्धेन भक्तिमता सदैवैकान्तहितेन सम्यग्दर्शनज्ञानभावद्याविरत्या-द्यन्तरङ्गकुटुम्बेन, अपरं चातीवमूढतया मिलिताः सर्वेऽपि ते तस्मिन्नेव तस्करवृन्दे, ततस्तैस्तस्करैरस्माभिः सहैकान्तेनैक्यमापन्नाः अमी इति प्रमुदितचित्तैः कारितास्ते नानाविधाधमनेपथ्यानि, नर्त्तिताः प्रदत्तहस्ततालं प्रचुरप्रकाररूपैः पायिता मद्यानि खा-

दिता मांसानि प्रेरिताः प्राणिवधेषु निपुणीकृता महामिथ्याभाषणेषु उत्साहिताश्चौर्ये प्रवर्त्तिताः परकलत्रेषु रतिं नीताः प्रचुराकाङ्क्षेषु, ततः प्रापिताः कदाचिन्नरके यातनासमूहान् भ्रामिताः शशकशूकरबलीवर्दादिरूपैः, स्थापिताश्चाण्डालादिवेश्मसु परिधापिताः सुमलिनचीवरखण्डानि निवासिताः कारागृहेषु क्वचिदन्धीकृताः क्वचिन्मूकतां नीताः क्वचित् खण्डितकरचरणाद्यवयवाः क्वचित् कुष्ठिनः क्वचित् प्लीहनः क्वचिद्भगंदरिणः क्वापि ज्वरिणः क्वचिदतीसारिणः क्वचिन्नष्टरतयः क्वचिद्भ्रष्टमतयः क्वचिद्विकलगतयः क्वापि क्षीणसर्वशक्तयो लुण्ठन्तः पतन्तः क्रन्दन्तः शोचन्तो निन्दन्तः प्रलपन्तो विघूर्णयन्तः क्रुध्यंतः खिद्यन्तः सीदन्तः क्वापि क्षुत्पीडिताः क्वापि पिपासार्दिताः क्वचित् सेधिताः प्रापितहीनामररूपा अपि च त्राणशरणहीना विनाटिता विचित्रप्रकारैः, तथापि विपर्यस्तमतितया तानेव ठगतस्करान् बहु मन्यमानाः पुनः पुनरित्थमेव तैस्तैर्विडम्ब्यंत एवेति, शुभपरिणतिपुत्रास्तु नातीव व्यामोहितास्तदीयठगविद्यया, ततो नैकान्तेनाद्यापि तेषां वशमुपगच्छन्ति नापि सर्वथैवापहृतसर्वस्वाः न चैकांततोऽकार्याभिरताः, किन्तु किञ्चित्तद्विद्यावशीकृता अपहृतानपहृतसर्वस्वा एकान्तेनात्मनो मीलनार्थं च पुनः पुनरपि तैस्तस्करैरभ्यर्थमानास्तत्स्वरूपं च सम्यगजानन्तः किमेतानेव प्रमाणीकुर्म्महे न वेति संशीतिदोलामारूढाः यदि कंचन विज्ञं महापुरुषं पश्यामस्तदा तमेव पृष्ट्वा यथोचितमनुतिष्ठाम इति विचिन्तयन्तश्च दयितासमानीतं समयराजमहापुरुषं कथमप्यद्राक्षुः, दृष्ट्वा च नवनीरददर्शनाच्छिखण्डिन इव प्रमुदितमनसः कान्तासमुत्साहितवृत्तयस्तदभिमुखं समुपसृत्य भक्त्या प्रणम्य चोपविष्टास्तदन्तिके, ततस्तत्तथाविधमसमञ्जसं विलोक्य समुत्पन्नमहाकरुणापरिणामस्तत्सहरीवचःसमुत्साहितश्च स महात्मा विनिर्यद्दशनकिरणप्रकाशितदिग्वलयो जल्पितुमारब्धो, यथा हन्त शुभपरिणतिपुत्राः ! लब्ध्वा सुकुलजन्मादिसामग्रीमतिदुर्लभां । न युक्ता तस्करव्रातघ-

टना भवतामियं, एते यतः कुविद्याभिर्वशीकृत्य जगत्रयं मुष्णन्ति भ्रमयन्त्येव मीलयित्वा तथाऽऽत्मनः॥२॥न तद् दुःखं न तद्दौस्थ्यं, न सा काचिद्विडम्बना। प्रापयन्ति न यामेते, प्राणिनः स्ववशं गतान्॥३॥नासौ सुरो मनुष्यो वा, समस्तबलवानपि। यः खण्ड्यते हठादेभिर्दुष्टैरात्मवशं गतः ॥१॥ किं वा बहूक्तैः? यत् किंचिद्युष्मद्वमात्रबन्धुषु। एतैः कृतं न तत्तत् किं, प्रत्यक्षं भवतामपि?,॥ २ ॥ तस्मात् कुरुध्वं मद्वाक्यं, यदि काप्यस्ति चेतना। येनैतद्दुःखसंघातान्मोचयामि समंततः॥२॥तदेतत् करुणारसप्रधानं वचनमाकर्ण्य समयराजदर्शनमात्रादेव चापहस्तिताशेषतस्करप्रयुक्तकुविद्यावासनैरभिहितं कृतकरकुड्मलैर्विमलबोधादिभिः, यथा स्वामिन्ने-तावन्ति दिनानि करुणारसमहासमुद्राद्भवतोऽन्तरेण निःशरणाः सम्यगेतेषां स्वरूपमलक्षयन्तो मुग्धकुरंगका इवाखेटकैरमीभि-र्दुरात्मभिस्तस्करैर्वयमपि त्रस्यन्तोऽपि मुषिताः नश्यन्तोऽपि विडम्बिताः अनिच्छन्तोऽपि किंचिदात्मनो मीलिताः, तदिदा-नीमेतस्मिन्नेव तस्करवर्गे व्यामोहात् किंचिद्विश्वस्तैर्निसर्गत एव किमप्युद्विग्नैः संशयदोलादोल्यमानसैर्महानदीश्रोतःसमुह्यमानसांया-त्रिकैर्महायानपात्रमिव तव वचः सुचिरात् सम्प्राप्य प्राप्तमस्माभिर्यत्किमपि प्राप्तव्यं निरस्तास्तस्कराः सम्पन्ना वयं कृतार्थाः, किन्त्वेतावत्कथयन्तु परमसुहृदः क्वेदानीं वर्त्तन्ते दुष्टास्ते? न दृश्यन्तेऽत्र प्रदेशे, समयराजेनोक्तं-देवानुप्रिया! न किंचिद् दूरं गताः, किन्तु मद्भयादेते पुरतोऽदूरवर्तिनि प्रदेशे मदीयविप्रयोगं प्रतीक्षमाणा युष्माकमुपरि दशनाग्निःश्राणयन्त-स्तिष्ठन्ति, ततस्तैर्भीतभीतैरुक्तं-स्वामिन्! यद्येवं कथयत तं कमप्युपायं येनैषां पुनरपि न वश्यतामनुभवामः, ततः समयराजः प्राह-वत्साः! सम्यग् विजानामि, यदेषां नाशकारणं किन्तु तत् साध्यते धीरैः, कष्टलक्षैः न लीलया ॥१॥ ततः प्राहुरमीस्वामिन्! एतत्तस्करसम्भवात्। किमपरं कष्टात् कष्टं, भविष्यति जगत्रये?,॥२॥ तत्कृत्यमादिश स्वामिन्!, दृष्ट्वा बन्धुविडम्बनाम्। श्रुत्वा

वाक्यं च युष्माकं, किमस्माकं सुदुष्करं? ॥ ३ ॥ एतदाकर्ण्य तद्वाक्यं, विवेकविनयान्वितम् । प्रोक्तं समयराजेन, यद्येवं श्रूयतां तदा ॥ ४ ॥ एतत्संगोऽतिदूरेण, प्रथमं तावद् वर्ज्यते । न गन्तव्यं कदाऽप्येषां, मूलावासे हितैषिभिः ॥ ५ ॥ ग्राह्यस्ततोऽपि मद्दत्तो, महामन्त्रो रुचिस्तथा । कर्त्तव्या महती तत्र, तस्करोच्छेदकारिणी ॥ ६ ॥ ततो नयाम्यहं युष्मांश्चारित्रनृपतेः पुरम् । दुर्गं महालयं श्रीमत्, सर्वोपद्रववार्जितम् ॥ ७ ॥ भक्ताश्चारित्रराजस्य, मम निर्देशवर्त्तिनः । वसंति तत्र ये तेषां, दूरे नश्यन्ति तस्कराः ॥ ८ ॥ तदेतदतीव हितैषिणा समराजेनोक्तं वचः श्रुत्वा कान्ताजनन्योश्च प्रभावं गंभीरस्यापि तस्य किंचिदवगतपरमार्था हर्षोदंचितवपुषः इत्थं प्रत्यवादिषुः, यथा स्वामिन् ! दृष्टश्रुतविपाकत्वेन युष्मदनुभावाच्चैतैः सह संगस्तावदुपरत एव, मूलावासं त्वमीषां सम्यग् न जानीमहे, ततः प्रसादं विधाय भवन्त एव तं दर्शयन्तु, अज्ञातस्य वर्णयितुमशक्यत्वाद् , अपरं च-दीयतामनुग्रहं कृत्वा महामन्त्रो, नीयन्तां स्वस्थप्रदेशान्तरं वयमिति, ततः समयराजेन प्रोक्तं-सत्यं, [किन्तु-निरादिकेऽत्र संसारे, भ्रमितो भवकोटिषु। मातापित्रादिरूपेण, जाताः सर्वेऽपि जन्तवः॥१॥ वैरभावोऽपि संजातः, सर्वेषामप्यनन्तशः। परस्परं ततः कोऽत्र, मातापित्रादिनिश्चयः?॥२॥] तद्विनयावर्जितमनसा योग्यतां चाकलय्य विस्तरतः प्रदत्तो महामन्त्रः,अवगतश्च तेषां तदर्थः, समुत्पन्ना च तत्र महती रुचिः, ततः स्वस्थदेशान्तरजिगमिषायां शेषभ्रातृभिर्विमलबोधं प्रत्यभ्यधायि, यथा भ्रातर्दुष्प्रतीकारौ श्रूयेते मातापितरौ, गन्तव्यं चेदानीं दूरदेशे, ततो यदि युक्तं तदा तत्पृच्छा गृह्यते, ततः प्रोक्तं विमलबोधेन-वत्स ! साधूक्तं, किन्तु-निरादिकेऽत्र संसारे, भ्राम्यतो भवकोटिषु । मातापित्रादिरूपेण, जाताः सर्वेऽपि जन्तवः ॥ १ ॥ वैरभावोऽपि संजातः, सर्वेषामप्यनन्तशः । परस्परं ततः कोऽत्र, मातापित्रादिनिश्चयः? ॥ २ ॥ किंच, तस्करैर्लुट्यमानानामेतैस्त्राणं न किंचन । निछिन्नच्चौरकास्तस्मात्,तत्त्वतः सर्वदेहिनः ॥५॥

किन्तु यद्यत्र निर्बन्धो, युष्माकं विद्यते तदा । आकार्य पृच्छ्यतामत्र,, मातापित्रादिको जनः ॥४॥ अन्यथा हि स्वयं तत्र, गच्छतः स्वामिवर्जितान् । धूर्त्ताः प्रतार्य मोच्यन्ति, न पुनः स्वामिसन्निधौ ॥ ५ ॥ तत्रान्तरे चिन्तितं पुरन्दरकुमारेण-अहो विमलबोधस्य सूक्तवचनता, न ह्यसमासन्नमहाकल्याणानामेवंविधा बुद्धयः परिस्फुरन्ति, तद्यदि क्वचिदसौ ज्ञायते तदा तद्दर्शनेनात्मानं पवित्रीकुर्मे इत्यादि विचिन्त्य सहर्षमुक्तं-भगवन्तस्तत इति, एवं चोक्ते पुनरपि गुरुराह-एवमेकमतीभूय, प्रेषितः सकलैस्ततः । अध्यवसायाख्यो दूतस्तेनाहूतौ च सत्वरम् ॥ १ ॥ अदृष्टसंचयो राजा, राज्ञी शुभपरिणतिः । द्वावप्युदीर्णमाहात्म्यावगतौ सपरिच्छदौ ॥ २ ॥ ततो व्यतिकरः सर्वः, पित्रोस्तैः प्रतिपादितः तमाकार्ण्य धनध्वानान्, मयूरीव मुदं गता ॥३॥ तन्माता प्राह तान् पुत्रान्, वत्सकाः ! साधु चाष्टितम् । नीता सफलतां यस्मान्, मन्मनोरथपादपाः ॥ ४ ॥ एतर्हि तस्करैः संगं, युष्माकं प्रविलोक्य मे । तद्दुःखमभवत् क्षीणा, येनेत्थं वपुपाऽप्यहम्॥५॥ प्रकुर्वद्भिरिदं वाक्यं, तस्मादस्य महात्मनः । हृष्टिः पुष्टिर्धृतिर्बुद्धिः, साधिता मम पुत्रकैः ॥६॥ अपरं च मृतं नष्टं, व्याधितं व्यसनैर्द्रुतम् । सहन्ति मातरः पुत्रं, वराक्यो विवशा अपि ॥ ७ ॥ यच्चैकान्तहितासक्तैरेवंभूतैर्महात्मभिः । दुष्टतस्करदुःखेभ्यो, मोचायित्वा कृपाधनैः ॥८॥ नीत्वाः स्वस्थेषु देशेषु, प्राप्यन्ते गुणसम्पदः । पुण्यवत्या मया कस्मात्, सह्यन्ते ते न पुत्रकाः ? ॥९॥ तस्मात् स्वकार्ये सेवध्वं, ध्वंसध्वं दुष्टतस्करान् । वर्द्धयध्वं यशःकीर्ती, पुत्रकाः ! स्वकुलात्मनोः ॥९॥ श्रुत्वा विमलबोधेन, तद्वाक्यं हृष्टचेतसा । पितुर्वक्त्रं ततः सर्वैर्बन्धुभिः सह वीक्षितम् ॥ १० ॥ ततः पित्रोदितं वत्स !, लब्धाऽवसरयाऽनया । यज्जन्मात्रा कृतं कार्यं, तत् प्रमाणं सदा मम ॥११ ॥ एतेऽपि युक्तमिच्छन्ति, सत्स्वभावादिमन्त्रिणः । कार्यमेतत् परं किन्तु, स्वकान्ता पृच्छ्यतामिति ॥ १२ ॥ प्रारब्धानि महायत्नात्, कार्याणि त्रिदशैरपि । प्रातिकूल्यं गता ह्येषा, खण्डशः कुरुते

क्षणात् ॥ १३ ॥ ससम्भ्रान्तैस्ततः सर्वैर्वीक्षिते मुखपङ्कजे । सगद्गदगिराप्रोक्तं, भवितव्यतया ततः ॥१४॥ श्वश्रूजनेन यद्वाक्यं, तदादिष्टं मयाऽपिच । न लङ्घितमियत्कालं, मतं तत्सम्मतं यदि ॥१५॥ कार्यमेतत्तदा तात!, सुतरां मम सम्मतम् । एतावती यतः सर्वा, सामग्री मीलिता मया ॥१६॥ मीलितामपि तां हन्मि, किन्तु श्वश्रूप्रभावतः । मदीयानुज्ञया चैते, चेष्टन्तां कार्यसिद्धये॥१७॥ तदेवं समस्तकुटुम्बेनानुज्ञाता विमलबोधादयो निमीलितकरकुड्मलाः परमप्रमोदानन्दविमलनेत्राम्बुबिन्दवः समयराजं प्रत्यवादिषुः-यथा स्वामिन्! कुरुतेदानीमनुग्रहं, नयत चारित्रनृपतेर्नगरं मोचयत दुष्टतस्करविडम्बनाभ्य इति तैः सविनयमभिहितेन समग्रतत्कुटुम्बेनाभ्यर्थ्य समुत्साहितेन सविशेषोत्पन्नकृपापरिणामेन समयराजेन विशिष्टविधानतो नीताः सर्वेऽपि चारित्रधर्मराजपुरं, ततः समुल्लसिता शुभपरिणतिः, समालंबितमदृष्टसञ्चयेनौदासीन्यं, भवितव्यता पुनर्विहितप्रच्छन्नरूपान्तरा भर्तृस्नेहतरलितमनास्तत्रैव गता, अपरंच-तत्र प्रदेशे समाने पितृत्वे एके स्वस्थीकृताः अन्ये तु नेत्यादिलोकापवादभीत्या भवितव्यतया अशुभपरिणतिपुत्रा अपि केचित् समानीता आसन्, ते च तं व्यतिकरमालोक्य केचित् समयराजं साक्षेपमाक्रोशन्ति केचित् प्रदत्तहस्ततालं गाढमुपहसन्ति, अन्ये विमलबोधादीन्निर्भर्त्सयन्ति, अपरे त्वदृष्टसञ्चयादिकुटुम्बं निष्ठुरमुपालभंते, एके तु वयमेवात्र पुण्यभाजो यदस्य वशं नोपगताः, अद्यापि स्वामित्रैः कामादितस्करैः सहास्माभिः स्वेच्छया क्रीडितव्यमित्याद्यभिधाय कलकलकलरवं कुर्वन्तः प्रपलायिताः, ततः सर्वेऽपि गत्वा तैरेव तस्करैः सह निर्भरं क्रीडितुमारब्धाः, तस्करा अपि समयराजभीत्या विमलबोधादीनामपहृतं मोषं समर्प्य ततः प्रदेशान्नष्टाः, ततः समयराजेन विमलबोधादयोऽभिहिताः-सैषा पुरतो देवानुप्रिया! अनेकव्यतिकरसमाकीर्णा मनोभूमिर्नाम, तन्मध्यवर्त्ति च पश्यतैतद्गुप्तं प्रशमप्राकारेण वलयितं कल्याणमित्रसेवाभिधानपरिखया विमलचित्तं नाम नगरं,

यन्निवासिजनसमृद्धिं समालोक्य धनदोऽपि जिहेति शक्रा अपि स्पृहयन्ति चक्रिणोऽपि तृणाय निजलक्ष्मीं मन्यन्ते, किं बहुना ?, यस्य सीमां न लङ्घन्ति, बलिनस्तेऽपि तस्कराः। तदनन्तगुणसङ्कीर्णं,कः पुरं श्लाघितुं क्षमः॥१॥ तदन्तश्च पश्यत त्रिदशेशानामपि स्पृहणीयं चरणमोहजयाभिधानतः प्रसिद्धमेकविंशतिभूमिकोपेतं प्रासादं परिपूर्णं समस्तसमृद्धिभिः शोभितं समुल्लसदनेकशुभक्रिया-संहतिवैजयन्तीभिः निरुद्धेतरजनप्रचारं द्वारस्थितनिजावरणकर्माख्यप्रतीहारेण, अपिच-सद्गुणैः सुभटैः कीर्णमनन्तैर्विश्वजेतृभिः। सन्तोषरम्यकारामराजितं सर्वतोऽपिच ॥ १ ॥ एतन्मध्ये च निरीहताभिधानवेदिकायां सुदर्शनाख्ये रत्नमयमहासिंहासने समुपविष्टं विष्टपत्रयधरणोद्धरितपुनर्व्यावृत्तनिजयशःपुञ्जैरिव सितचामरोत्करैर्वीज्यमानं सेवागतप्रणतत्रिदशनरनायकशिरःसमाविष्ट-मणिकिरीटसमुच्छलद्बहलरत्नांशुमांसलितचरणनखप्रभाजालं मोहमहाचरटबंदीकृतहठविमोचितनरामरवधूगीयमानतुहिनांशुशुभ्रस्व-गुणनिकरानुबद्धकलगीतश्रवणदुर्ललितश्रवणयुगलं सर्वोपद्रवव्रातविनिर्मुक्तनिर्वृतिपुरीव्यवस्थापनास्वस्थीकृतानन्तप्रणतजन्तुनिवहं, अपिच-पीयूषवृष्टिं कुर्वन्तं, पश्यतां दृष्टिचेतसोः। महारिषट्कजेतारं, स्रष्टारं नीतिसम्पदाम् ॥ १ ॥ ये लोकेऽत्र शुभा भावास्तान् गृहीत्वेव वेधसा। विनिर्मितं विलोकध्वं, चारित्रनृपतिं पुरः ॥ २ ॥ ततो विमलबोधादिभिः प्रमुदितमानसैरुक्तं-स्वामिन्! एतस्य राज्ञ आस्थाने एकैकं नायकं गुणरत्नराशिमिव पश्यामः तत् प्रसादं विधायैतेषामपि स्वरूपं संक्षेपतः कथयत किञ्चित्, ततः समयराजः प्राह-देवानुप्रिया! एष तावदस्य दक्षिणभुजासन्नो यतिधर्म्मो नाम ज्येष्ठपुत्रः। माहात्म्यं त्वस्य किं ब्रूमो?, व्यतिक्रान्तजगत्त्रयम्। किन्तु संक्षेपतो ज्ञेयः, पितुरेष गुणाधिकः ॥ १ ॥ एष एव सदाऽऽराध्यो, भवतां च प्रयत्नतः। इत्थमेव यतोऽत्यन्तं, तुष्यत्येष नराधिपः ॥ २ ॥ अयं पुनः कुमारा! अस्यैवान्तःपुरापवरकेषु ईर्यासमित्यादिनामिका रूपलावण्यशालिन्योऽष्टाववरोधबालिका

दृश्यन्ते, ताभिरेवाराधिताभिस्तुष्यति, यतः-सर्वस्वं जीवितं प्राणा, एता एवास्य बालिकाः। एतद्विरहितस्त्वेष, क्षणमेकं न जीवति ॥ १ ॥ वामभुजासन्नः पुनर्गृहिधर्म्मो नामाऽस्यैव कनिष्ठपुत्रः, ज्येष्ठपुत्रस्वतन्त्रोऽपि, सुतानां निर्वृतिप्रदः । तद्द्वारतः स्थितोऽसौ स्यादेतावद्भिद्यतेऽनयोः ॥ १ ॥ अयं पुनर्विमर्श-प्रहर्षादिमहामन्त्रिशतपंचकोपगूढो जिनमुद्राभिधानमहामुद्रा-पवित्रितहस्तः सकलकार्याणि पर्यालोचयन्नस्यैव सद्बोधो नाम महामहत्तमो मन्तव्यः, अपरं चास्यैव सन्निधावनेकसाधुसुभट-वृन्दानिषेवितः सुरनरविद्याधराधिपैर्बहु मन्यमानो मोहमहाचरटविडम्बनाविमोचितोऽनेकजनसंस्तूयमानगुणनिकरः सकल-तस्करजालोच्छेदपटुः प्रतिक्षणं सूत्रितानेकोपायपटलः जगत्त्रितयचेतश्चमत्कारिनिःशेषातिशयसम्पन्नः सकलसद्विद्यामन्त्रनिलयः कृतनिःशेषप्रतिपक्षविलयः सकलजगत्प्रदत्तव्यथमन्मथप्रथितशिलीमुखावलीखण्डनप्रचण्डशुभध्यानाभिधानकरालकरवालव्य-ग्रहस्तो यः समालोक्यते स पुनः सदागमनामास्यैव राज्ञो दण्डनायको ममैव प्रतिशरीरं बोद्धव्यः, एतद्भीत्या हतं वातैः, पर्णवृन्दामिव क्षणम् । न बध्नाति पदं क्वापि, स मोहस्तस्कराभिधः॥१॥ न तत्पदं न सा लक्ष्मीर्न तत् सौख्यं न तद्यशः । यन्नैष यच्छति प्रीतः, प्राणिनां भक्तियोगतः ॥ २ ॥ नृपतेः सर्वमेतस्य, कटकं वाहयत्यसौ । आज्ञां च कुरुते योऽस्य, तस्यैव सुखमेधते ॥ ३ ॥ एतदाज्ञां त्वतिक्रान्ता, निष्कास्यन्ते पुरादितः । सहन्ते दुःखलक्षाणि, प्राप्ता मोहादितस्करैः ॥ ४ ॥ किमत्युक्तेन? सामन्ताः, प्रजा राजा नियोगिनः । अस्मिन् जीवति जीवन्ति, विलीयन्तेऽन्यथा क्षणात् ॥ ५ ॥ य एते पुनस्तेजसा रविं कान्त्या चन्द्रमसं रूपेण रतिप्रियमप्यधरयन्तः शिरोविनिविष्टमणिकिरीटा यमनियमोपशममार्दवार्जवसन्तोषतपःसंयमसत्यशौचाकिञ्च-न्यब्रह्मसंवरपुण्यशुभपरिणामादयः सदागमसेनाधिपं पुरस्कृत्य यथोचितस्थाने जनेपूपविष्टा दृश्यन्ते तेऽस्यैव नृपतेः सेवागताः

सामन्ता ज्ञातव्याः, एषां पुनर्मनोवश्यताकरणनिगृहीत्यहिंसासत्यताशुचिताब्रह्मरतिनिःस्पृहतादिशेषान्तःपुरिकापवरक—परिवृतमहाप्रासादोपरिसकलजनहितैकचिन्तनरता योगिनामप्यभिलषणीयरूपा सा चारित्रधर्मस्य राज्ञो विरतिर्नामाग्रमहिषी मन्तव्या, शेषाण्यप्यत्र धृतिस्मृतिविज्ञप्तिविविदिषाशुश्रूषादीनि यथासम्भवं कानिचित् कस्यचित् कलत्राणि मन्तव्यानि, अयं च राजा चारित्रधर्म्मो देवानुप्रिया ! यदि विधिना भक्तितः समाराध्यते तदा तिष्ठन्तु तावत् सामन्तादयो योषिदप्यस्य सम्बन्धिनी एषैका समर्था मोहादितस्करप्रलयकरणे, ततो हर्षोदंचितशरीरैः प्रोक्तं विमलबोधादिभिः— स्वामिन् ! निष्कारणपरमबन्धुभिरदृष्टपूर्वं बहुपुण्यकोटिघटमानसण्टङ्कं सदैव दूरीकृताभव्यप्राणिनिवहं दर्शितं तावच्चारित्रधर्मस्य नृपतेः पुरं सैन्यं च, इदानीं कोऽसौ विधिर्येनासौ नृपतिरस्माभिः समाराधनीयः ? कथं चास्मिन्नगरे वस्तव्यं ? एतत् कारुण्यं विधायापरमपि कथयन्तु परोपकारैकरसचेतसो भवन्त इत्युक्तः पुनरपि समयराजः प्राह-समाकर्णयत देवानुप्रियाः ! सम्यगवहितेन चेतसा एतदाराधनाविधानं, इह तावत् कण्ठगतप्राणैरपि यावज्जीवं न मोक्तव्योऽयमिति कर्त्तव्या प्रथममेव दृढप्रतिज्ञा, ततः समारोहणीयं करण—निग्रहाभिधाने जात्यतुरङ्गमे, सन्तुष्टिवल्गासञ्चारैर्जिनाज्ञाकशादर्शनतश्च नेतव्योऽसौ सदैव वशतां, परिधानीयं वपुषि कषायजयाभिधानं प्रतिपक्षप्रहारवारणक्षमं महाकवचं, धारणीयं करे रिपुवपुर्निर्भेदनकक्षं तपोविध्याभिधानं तीक्ष्णं महाकुंतं, क्षेप्तव्यो-ऽथवा (निस्त्रिंशेन नाराचोऽ) यं ममत्वाहङ्कारादिमहाकरटिकरटतटपाटनपटिष्टो जीववीर्याभिधानो निसितः (कृपाणः)अपरं च सेनाधिपसदागमार्पितेषु नैगमसङ्ग्रहाद्यभिधानेषु मत्तगंधगजेषु समारुह्य प्रतिदिनं कर्त्तव्यस्तत्त्वपरिभावनाभिधाननाराचपरिक्षेपपरिश्रमो वाहनीयास्तदर्पिता एव प्रशस्तमनोवाकायाभिधाना यानतुरंगमा अप्रमत्ततासरिद्विपुलिनप्रदेशेषु, अध्यारुह्य तत्प्रसादी-

कृतेषु शुभमनोरथमिव्रानस्यन्दनेषु चित्तैकाग्रताधनुर्यष्टिविमुक्तसद्बुद्धिबाणावलीभिर्विधातव्यो नवतत्त्वलक्ष्यवेधाभ्यासः, वर्द्धितैरवोल्लसच्चारुपरिणामाख्यैरमङ्क्षपदातिभिर्दातव्यमनवरतं बलदर्शनं, एतन्नगरसीमां चानुल्लङ्घयद्भिः सदैवाप्रमत्तैरिह वस्तव्यं, तन्नरेन्द्रसन्निधानं च क्षणमपिनमोक्तव्यं, उत्तेजनीयानि चानवरतं समस्तप्रहरणानि, विशेषतस्तु जीववीर्यकृपाणे रक्षणीया सर्वथैव विच्छायता, तन्मालिन्यं हि विलोक्यैव राजा तत्क्षणमेव मोटयति मुखं कलुषयति मनो निवारयति सद्वृत्तिं, किं बहुना ?, अतिखेदात् झगिति स्वयमेव विलीयते वपुषा, तस्मादतीव निर्म्मलीकृत्यामुं कृपाणं समुल्लास्य चाभीक्ष्णं चारित्रनृपतिं साक्षिमात्रे व्यवस्थाप्य स्वयमेव मुख्यैर्भूत्वा निजप्राणेष्वपि निर्मुक्तस्पृहैर्योद्धव्यं मोहमहाचरटसेनया सह व्यापारणीयोऽसौ निस्त्रिंशः प्रतिक्षणमज्ञानविलसिताभिधानप्रतिपक्षसेनाधिपानीककण्ठविपिनविच्छेदेषु , यथोचितं व्यापारिताशेषप्रहरणैरपि निहत्य सनायकं प्रतिपक्षबलं गृहीतव्या रणरंगजयपताका, प्रहर्षं नेतव्याश्चारित्रधर्म्मनृपतिसैनिकाः. एवं च कृते तथाऽसौ क्षितीश उत्कर्षं प्रतिपत्स्यते यथा निजराज्यसर्वस्वभूता निर्वृत्तिनगरीमपि प्रसादयति, यस्यां जगत्त्रयातिशायिविभवस्वामिनो लोकाः, न दृश्यते स्वप्नेऽपि कस्यचिद्दारिद्र्यं न प्रभवन्ति रोगाः नास्कन्दन्ति शोका न भ्रमति परिसरेऽपि जराराक्षसी दूरात्रस्यति सोऽपि मृत्युर्महाकेसरी न पीडयति क्षुत् न बाधते पिपासा न दृश्यते कस्यचित्परिभवः अणीयोऽपि नालोक्यते दैन्यं न कदर्थयति विषादो न निर्दहति चिन्तादवज्वालावली नालिङ्गति राजग्रहो न लगन्ति कदाचित्कलहप्रदीपनकानि न चलन्ति सम्पदो न स्पृशन्ति विपदो न क्षणं तिष्ठन्ति इष्टविप्रयोगाः न मथ्नन्त्यनिष्टसम्प्रयोगाः नोद्वेजयन्ति खलदुर्भाषितानि न निरीक्ष्यते कस्यचिद् वृत्तिबाधा न शीर्यन्ते गृहाणि न क्रन्दन्ति श्रूयंते डिम्भरूपाणि न सन्तापयन्ति दुष्कर्म्मव्यवहारकाः न वीक्ष्यते कस्यचित् परस्परं मत्सरभावः, किं च-

हुना ?, तेषामपि सर्वेषां दुष्टमहामोहचरटादितस्कराणां नामापि न श्रूयते, स्वाभाविकानन्तसुखाः, सर्वाबाधविवर्जिताः । अनन्तकालं मोदन्ते, तस्यां सर्वेऽपि जन्तवः ॥ १ ॥ तदेतदवगम्य यथोक्तविधानतः सम्यगप्रमत्तैरेष नृपतिः समाराधनीयो, यदि पुनर्निमेषमात्रमपि प्रमादं करिष्यथ तदैष राजा युष्मदीयां तातिमपि न करिष्यति, ततः स्वप्रयुक्तमलिनाध्यवसायिनामकहेरिकाकृष्टास्तत्क्षणमेव लब्धोदयाः सर्वेऽपि ते तस्कराः प्रादुर्भविष्यन्ति, ततोऽस्मत्प्रतिपक्षोऽमीभिराश्रित इति सञ्जातमहामत्सराः पूर्वावस्थातः सुतरां कदर्थयिष्यन्ति, दुर्घटश्च पुनरप्यनेन राज्ञा सह सम्बन्ध इति, एवं सकरुणं शिक्षितैर्विमलबोधादिभिः सगद्गदाक्षरमुक्तं-स्वामिन्! एतच्छिक्षाप्रदानतः सम्यगनुगृहीता वयं, केवलमस्य नृपतेः समाराधनविधौ या करणनिग्रहतुरङ्गादिसामग्री भवद्भिरादिष्टा सापि तस्करैर्मुषितानामस्माकं युष्मत्प्रसादत एव भविष्यति, ततः समयराजेनोक्तं- वत्स ! साधूक्तं, किन्तु मुषितमपि तस्करैर्मद्भयात् सर्वमिदं पुनरपि मुक्तमास्ते,क्व भदन्त !?, जीवस्वतत्त्वाभिधाने युष्मदीय एव चलद्गृहे, तच्च यद्यपि भवन्तः सर्वं सम्यगद्यापि न पश्यंति तथापि सर्वमहं प्रकटीकृत्य समर्पयिष्यामीति न किंचित्तत्र क्षूणमाशङ्कनीयं, केवलं प्रकटिताऽपि मया भवदीयान्तरङ्गलक्ष्मीरेकेनातीव महता रक्षणोपायेन स्थिरीभविष्यति, स चातीवाप्रमादतत्परैरेव साधयितुं पार्यते,कः पुनरसौ भदन्त ?, उच्यते, मया तस्करेभ्यो हठाद्विमोच्य निर्मलीकृत्य च भवदीये यथोक्तगृहे निःसामान्यमहाप्रभावान्वितं मनोरत्नलक्षणं यत् चिन्तामणिरत्नं व्यवस्थापितमास्ते तद्यदि तस्करैरपह्रियमाणं यत्नतः संरक्ष्य सर्वदैव स्वसन्निधौ ध्रियते तदेयमन्तरङ्गलक्ष्मी सर्वाऽपि प्रतिक्षणं वृद्धिमुपगच्छति, न च युगान्तेऽपि प्रचलति, किन्तु देवानुप्रियाः ! सुदुष्करमिदं, यतो मोहमहाचरटादितस्कराणामेतदपहरणे एव सर्वदैव महाप्रयत्नो, यतस्तस्मिन् अपहृते शेषो युष्मदीयान्तरङ्गविभवस्तत्प्रभावाकृष्टत्वात् सर्वस्तेषां स्वस्थानस्थिता-

नामपि स्वहस्तगत एव भवति, अत एव ते तद्रत्नापहरणार्थमनवरतं प्रेषयन्ति कुविकल्पाभिधानान् प्रच्छन्नमहातस्करानिति ते पातयन्ति क्षात्राणि दापयन्त्यवस्कन्दान् स्वयमेव च परिभ्रमन्ति विलीनाः पार्श्वतो निरीक्षन्ते यत्र तत्र तत्तच्छिद्राणि,ततस्तत्प्राप्तौ झगित्येव तदपहरन्ति, ततश्चारित्रधर्मक्षितीशसैनिकैस्ताडिताः कथमपि पुनस्तन्मुञ्चन्ति, पुनस्तथाऽपहरन्ति, पुनस्तथैव मुंचंतीत्येवमेतेषामत्रार्थे महान् प्रतिबन्धः, तस्माद्वत्साः! प्रयत्नतो गोपनीयं तन्निविडसद्भावनामंजूषायां जागरणीयमहर्निशमेवाप्रमत्तजागरिकया परावर्त्तनीयो नवरं मत्समर्पितो महामन्त्रः स्थापनीयाश्चतुर्दिक्षु शुभयोगाभिधानमहासुभटाः प्राहरिकाः, इत्येवं तस्मिन् यत्नतो रक्षिते प्रकर्षप्राप्तायां निजान्तरङ्गलक्ष्म्यां प्राप्स्यथ सर्वं समीहितार्थमिति, अत्रान्तरे विमलबोधलघुभ्रात्रा विश्वम्भरेणोक्तं-स्वामिन्! पदे पदे विषमाः खल्वमी तस्कराः तदमीषामावासादिदर्शनेन सम्यक् तत्स्वरूपं ज्ञापयत येनानाभोगतोऽपि तदावासाभिमुखं न व्रजामः, तद्रक्षोपाये च सम्यग्यत्नमादध्मह इति, अत्रान्तरे पुरन्दरकुमारेण चिन्तितं-अहो साधु विश्वम्भरेण पृष्टं, साधु मदीयहृदयाकूतं ज्ञात्वेवाऽनेनैतदीरितं, तस्मादवहितचेतोभिः श्रोतव्यमिदं, ततः समयराजेनोक्तं- यदि तदावासस्वरूपादिजिज्ञासा भवतां तर्ह्यस्या एव मनोभूमेरदूरवर्त्तिनि प्रदेशे समागच्छत आयुष्मन्तो! येनैतदपि सङ्क्षेपतः सर्वं सम्पादयामि, ततः प्रतिपन्नं सर्वैः, नीताश्च क्षणार्द्धेन तत्र प्रदेशे. ततो भुजमुत्क्षिप्य प्रोक्तं समयराजेन- देवानुप्रियाः! पश्यताग्रतस्तावत् प्रमादवनं नाम महावनं, यत्र प्रविशतां सुराणामप्यतिगहनतया मुह्यन्ति चेतांसि सीदन्ति गात्राणि विस्मरत्यात्मा जायते दिङ्मोहः सम्पद्यते सन्मार्गभ्रंशः, अपरं च एतस्मिन् वने स्थिताः पापिष्ठाः पश्यन्ति निर्विशङ्कं रमन्ते पापर्द्धिभिः भक्षयन्ति मांसानि पिबन्ति मद्यानि क्रीडन्ति परकलत्रैः वल्गन्ति निरर्गलं धावन्ति निरंकुशं पूत्कुर्वंति विमुक्तलज्जं गायन्ति सोन्मादं नृत्यन्ति सविह्वलं युध्यन्ते परस्परं शेरते

क्वचिन्निर्भरं विप्रवदन्ते क्वचित् यथेष्टं, अन्यच्च-तदेव सर्वदैव निवासः सर्वतस्कराणां स्थानं पारदारिकाणां निलयनभूमिर्द्यूतकाराणां निरुपहता वसतिर्मद्यपानां अभिरतिहेतुराखेटकानां, किं बहुना ?, सर्वथैव दूरोज्झितं शिष्टैः सेवितं निकृष्टैः, अस्मिंश्च वने यानि परितः सीध्वासवमधुपरिश्रुद्वारुणीप्रभृतिजलानि नानाविधस्थानेषु दृश्यन्ते तान्यपि तावन्निःशेषानर्थहेतुत्वेन प्रतिपत्तव्यानि, तथाहि-अज्ञानान्धानां निकृष्टचेष्टितानामेतत्पायिनां झगित्येव विगलति स्मृतिः विसंस्थुलीभवन्ति गात्राणि निःसहं भवन्ति क्षोणीतले निपाताः, ततः प्रवर्त्तते छर्दयो मुखे मूत्रयन्ति श्वानः समुल्लसत्यशुभगन्धो भणभणायन्ते वपुषि मक्षिकाजालानि निष्ठीवत्यवस्त्रेण मुखमवगुण्ड्य च पराङ्मुखीभवति शिष्टलोकाः सर्वथा परिभ्रश्यति विवेको न स्मरन्ति गुरुवचनानि न लक्ष्यीभवति देवतेतरविभागो न विपर्यीभवति मातापित्रादिव्यवस्था, ततो मातर्यपि कलत्रवत्प्रवृत्तिरुपजायते कलत्रेऽपि मातृवत् भगिन्यामपि दासीवत् दास्यामपि भगिनीवत् पित्रादिष्वपि वैरिवत् वैरिण्यपि जनकादिवत्, किं बहुना?,अर्थक्षयाद्यनर्थानां, सम्भूयेहापि भाजनम्। पतन्ति नरके घोरे, सीध्वादिजलपायिनः ॥ १ ॥ तप्तत्रपूणि पाय्यन्ते, तप्ततैलं क्वथत् तथा। वज्रसन्दशकैरोष्ठजिह्वादि तोद्यतेऽनिशम् ॥ २ ॥ तच्छरीरवशारक्तपूयापूर्णं विधाय च। सीव्यते वक्त्रमत्यन्तं, क्रन्दतामप्यधार्मिकैः ॥ ३ ॥ ये पुनरमी देवानुप्रियाः! परतो निरन्तरमनेकस्थानेषूच्चावचाः शब्दरूपरसगन्धस्पर्शनामका बहवो वृक्षा निरीक्ष्यन्ते एतेषामपि प्रथमापातमात्रे प्राणिनो मदयन्ति मूलानि प्रमोदयन्ति कन्दाः धिन्वन्ति स्कन्धाः सुखयन्ति शाखाः प्रीणन्ति प्रवालानि प्रहर्षयन्ति पत्राणि प्रल्हादयन्ति पुष्पाणि अतिमुग्धानां च स्वदन्ते त्वचा अमृतायन्ते फलानि परमाश्वासकरी छाया, किं बहुना?, एतान् नैवाध्यवस्यन्ति, वृक्षान् ज्ञानसमाहिताः। सर्वस्य जीवलोकस्य, सारसौख्यैककारिणः ॥ १ ॥ परिणामे पुनरेत एव विटपिनः समूलस्कन्धादिस्वरूपा विशेषयन्ति कालकूट-

विषाणि निरस्यन्ति सद्योमुक्तकृष्णाहिगरलानि कुर्वन्ति महाविसूचिकां ददति महादाहं प्रकटयन्ति कुष्ठानि प्रथयन्ति प्रमेहान् जनयन्ति ज्वरान् प्रकाशयन्ति काशान् दर्शयन्ति श्वासान्, किं बहुभाषितैः?, त्रैलोक्येऽप्यत्र यद् दुःखं, देहिनां दृश्यते क्वचित्। एतदङ्घ्रीयसंभोगं, मुक्त्वा नान्यस्य तत्फलम् ॥ १। ततो विमलबोधलघुभ्रात्रा शमजलधिनामकेनोक्तम्-स्वामिन्! अवगतमिदं युष्मत्प्रसादतः, किन्तु क एते परतः पञ्चजना आगच्छत भो पथिकाः! समस्तत्रिभुवनसुखसर्वस्वकोशान् मानयत वृक्षानमून् लालयत स्वशरीराणि एतदीयकोमलप्रवालश्रस्तरस्पर्शैः सफलीकुरुत स्वरसनादिनिर्माणमेतत्सरसमूलफलत्वगाद्यास्वादनैः चरितार्थतां नयत निजघ्राणविवराण्येतत्सुरभिसुमनःसमूहादिसमुच्छलद्बहलसुगन्धगन्धिपूरणेन प्रीणयत निजनेत्रपङ्कजान्येतदारोहपरिणाहसंस्थानादि — सौन्दर्यदर्शनेन तर्पयत स्वकीयश्रोत्राण्येतदाश्रितशुकसारिकपरभृच्छकुन्तादिश्रव्यशब्दश्रवणैः विश्राम्यत विश्रब्धं दूरप्रसृतास्वेतदीयबहलशीतलच्छायासु, किं बहूक्तेन?, समासादयत जीवलोकोत्पत्तिफलप्रकर्षमेतदुपभोगेनेत्यादि पूत्कुर्वन्त एतद्वनमध्यप्रविष्टं लोकं सादरमाकृष्यैतद्भूरुहाभिमुखं नयन्तश्च दृश्यन्त इति?, एवं शमजलधिना पृष्टेन समयराजेनोक्तं- वत्स! तदेतदिहातिगहनं वर्त्तते, यदेतेषां वचनं सर्वदैवापाकर्णनीयं, यतो हन्त महाधृष्टाः खल्वेते दुरात्मानः स्पर्शनरसनघ्राणचक्षुःश्रोत्रनामानो महातस्करा अमित्रमपि मित्रमिव आत्मानं सन्दश्य प्रस्तुतवृक्षोपभोगप्रवर्त्तनतः सकललोकं प्रहरमहाव्यसनसमुद्रे पातयन्तीति, ततो विमलबोधस्यापरभ्रात्रा विश्वगुणनामकेन पृष्टं- प्रभो! किं पुनरमीषां दुरात्मनामेवंविधं दुष्कर्म्म कुर्वतां स्वसाध्यं सिध्यति?, समयराजेनोक्तं-पापोदयदण्डाधिपादेशप्रसाधनात् नान्या काचिदमीषां स्वसाध्यसिद्धिः, तस्याप्येवंविधादेशदाने किं सिध्यतीति चेदुच्यते, निजस्वामिनो मोहमहाचरटस्योपचय इति, ततो विश्वगुणेनोक्तम्-हुं विज्ञातं, स एवात्र मोहमहाचरटः परम्परया सर्वानर्थ-

कारणं, तस्मात्तद्दर्शनार्थमेव स्वामिन्! अग्रतो गमनेन विधीयतां प्रसादः, ततः समयराजेन कियदपि दूरं गत्वा प्रदर्शनीमुत्सृत्योक्तं- वत्सा! यदेतद्वनमध्ये पुरतः प्रज्वलत्तेजः पश्यथ यूयं स क्रोधनामा अपूर्वो वनदवाग्निर्मन्तव्यः, तथाहि- स्वसन्निकर्षमात्रत एव जलादिभिरनुपशमनीयं जनयत्येष महासंतापं, ततो लब्धप्रसरः प्राणिनो मोहयति विवेकचक्षुषी निमेषमात्रत एव भस्मसात्करोति बहुकालप्ररूढान्यपि सुचरितवनानि समुच्छेदयति समूलानपि महावंशसन्तानान् मलिनयति स्वधूमशिखाभिः श्वेतरोचिःशुभ्राण्यपि यशांसि प्रथयत्यपकीर्त्तिं गमयति शिष्टजनशोचनीयतां समुत्पादयत्युन्मादान् वर्द्धयति कलहान् हरति प्राणान् प्रवर्त्तयत्यनेकभवानुगामिनो वैरप्रबन्धान् नयत्युत्पथं रुणद्धि सुगतिमार्गं पातयति नरकान्धकूपे, किं बहुना?, वधबन्धतनुच्छेदभेदकुट्टनपीलनैः। कशाङ्कुशपराघातक्षुत्पिपासामरुद्धिभिः॥ १ ॥ दारिद्र्योद्वेगदौर्भाग्यमहाव्याधिपराभवैः। ईर्ष्याविषादमात्सर्यसम्भ्रमैः परिपीडिताः॥ २ ॥ क्रोधाग्निदग्धसर्वस्वा, विह्वलास्त्राणवर्जिताः। अनन्तकालं भ्राम्यन्ते, प्राणिनो नरकादिषु॥ ३ ॥ तस्माद्यथोक्तदोषभीरुभिर्देवानुप्रियाः! प्रत्यासन्नैरप्यस्य न गन्तव्यम्, अथ किंचित्प्रज्वलन्नन्तरा समागच्छत्यसौ तदा मत्समर्पितोपशमजलेन तथाऽयमुपशमनीयो यथा न भवति क्वचिन्मार्गप्रतिबन्धक इति॥ योऽप्येष पुरतो मानगिरिर्नाम महाशैलो विलोक्यते सोऽपि हितैषिभिर्दूरतः सर्वदा परिहर्त्तव्य एव, यतो ये वराकाः सम्यग्ज्ञानविकलत्वेनैतस्मिन् समारोहन्ति ते तत्क्षणादेव महावज्रशिलासङ्घातघटिता इव न नमन्ति देवेभ्योऽपि न प्रणिपतन्ति गुरुभ्यो नाभिनन्दन्ति कुलवृद्धान् न बहु मन्यन्ते मातापितॄन् न मानयन्ति मान्यान् न पूजयन्ति पूज्यान् न चेतयन्त्यात्मानं नावबुध्यन्ते स्वभूमिकां न प्रेक्षन्ते सतोऽपि निजदोषसमूहान् न गणयन्ति शरच्चन्द्रचन्द्रिकावदातानपि परगुणनिकरान्, किन्तु दूरमुत्तानितहृदया ऊर्ध्वमवलोकयन्तोऽग्रपदैरिव किमपि किमपि पृथ्वीं स्पृशन्तः

स्वात्मनो वहुमानबुद्ध्या गुरुवृद्धशिष्टप्रदत्तविशिष्टोपदेशानप्यवमन्यमाना निजगुणलवभ्रांत्याऽपि परकीयप्रकटनिर्म्मलनिःसङ्ख्य-गुणलक्षाण्यपि निह्नुवाना विशदालोकेऽपि भव्यचक्षुषोऽपि गतचक्षुष इव पुरो व्यवस्थितं सकलभुवनविदितमपि जनमपश्यन्तः समुत्पन्नबाधिर्या इव हितसूक्तान्यप्यवज्ञयाऽशृण्वन्तः सर्वथाऽपहृतहृदया इव शून्यहुङ्कारान् प्रयच्छन्तो व्यलीकनिजशुचित्वाद्यभिमानबुद्धितो मूर्च्छिता इवाभीक्ष्णं नेत्राणि निमीलयन्तः स्वयं रंकप्राया अपि महामूर्खशेखरा अपि चक्रिणोऽप्यकिंचित्करान् शक्रानपि वराकान् बृहस्पतितुलानप्यकिंचिज्ज्ञान् सम्भावयन्तः तृणवत् त्रैलोक्यमालोकयन्तो महाग्रहगृहीता इव व्रजन्ति विद्वज्जनशोचनीयतां लभन्ते जनापवादान् परिह्रियन्ते शिष्टवर्गेण प्राप्यन्ते प्रतिपदं महाविपद्भिः, विमुच्यन्ते प्रतिक्षणं सर्वसम्पद्भिः, एतच्छैलाधिरोहण-माहात्म्याद्विह्वलं पदन्यासं कुर्वन्तः स्खलिता इव पतन्ति नरकान्धकूपेषु, कथमप्युद्वृत्य ततः श्वानःकरभाः खराश्च जायन्ते, भ्राम्यन्ति शबरयाचकचण्डालकुलेषु हीनेषु जातिकुलरूपरहिताः श्रुतशीलविवर्जिता धनवियुक्ताः क्वथ्यन्ते दुःखशतैर्माननगारोहणात् जीवाः, तस्मात् दूरतस्त्याज्योऽयं, यदि पुनर्मार्गविश्रान्तिषु वृद्धानां कथंचिदेष पुरतो भवति तदा मदर्पितकुलिशकठिन-मार्दवमहामुद्गरेण चूर्णयित्वा रजःशेषं नेतव्य इति ॥ पुरतः पुनरन्यन्महाश्चर्यं पश्यत वत्सा ! यदेकाऽप्येषा मायाभिधाना भुजंगी हृदयनामकेष्वपरिमितवल्मिकेषु नानारूपाणि बिभ्रती सदैव प्रतिवसति, सा चातीव शान्ता बहिःसंवृत्या नितरां दारुणा अन्तस्तत्त्व-वृत्त्या कुटिला गतिविभ्रमेण गुपिला स्वभावतः तिष्ठन्त्यपि न विज्ञायते सर्पन्त्यपि न दृश्यते दशन्त्यपि नोपलक्ष्यते, किन्तु?, विषवेदनाप्रदानफलैनैवानुमीयते, अपरं च-यत्र यत्र वल्मीकमालोक्यते तत्र २ कृतसविशेषोद्भटरूपान्तरा प्रवेष्टुमारभते, केवलं यथोक्तवल्मीकस्वामिनो ये एतद्भनतस्करभीत्या मां शरणं प्रपन्नास्तैर्मद्दत्तार्जवदण्डताडिता सती दूरं प्रणश्य गच्छाति, न पुनस्तत्र

प्रवेष्टुं शक्नोति, ये पुनर्मदीयनिर्देशबहिर्वर्त्तिनस्तैरनिवारिता सती तद्वल्मीकेष्वसौ प्रविशति, ततस्तानेव तावद्वल्मीकस्वामिनो निहिततीक्ष्णदंष्ट्रा दशति, ततस्तदीयापूर्वविषवेगभाविवतास्तेऽनुपलक्षितगुरुसुहृत्स्वपरभावाः सर्वक्रियासु वैपरीत्येनैव प्रवर्त्तन्ते, तथाहि-तेऽन्यद्विकल्पयन्ति अन्यदेव च प्रतिपादयन्ति कुर्वन्ति पुनः सर्वथाऽन्यथैव, अपरंच अविश्वस्तानपि विश्वसन्ति विश्वस्तेभ्योऽपि द्रुह्यन्ति पितरमपि प्रतारयन्ति मातरमपि वंचयन्ति बन्धूनपि विप्रलम्भयन्ति सुहृदोऽपि विभ्रमयन्ति जल्पन्ति कोमलं विध्यन्ति निष्ठुरं मुंचंति शनैर्बहिः पदानि अन्तः कृन्तन्ति परस्य शिरांसि दृश्यन्ते प्रथमं महामित्रवत् प्रकटीभवन्त्यवसाने महाशत्रुवत् चोरयन्ति लीलयैवालीकवचनरचनयाऽन्यचित्तानि मार्यमाणा अपि निजहृदयानि कस्यापि नार्पयन्ति अबन्धुरूपा अपि बन्धुरूपं विगतस्नेहलेशा अपि सस्नेह महादुष्टा अपि सुशीलं एकान्ततो अहिता अपि हितं विरक्ता अप्यनुरक्तमात्मानं तथा दर्शयन्ति यथाऽतिविदुषामपि विस्मयपथमवतरन्ति चेतांसि, अपरंच-कार्यापेक्षितया कदाचिद् दूरे कदाचिदासन्नाः क्वचित्तुष्यन्ति कदाचिद्रुसन्ति कदाचित् कृष्णमुखीभवन्ति क्षणेन घटन्ते क्षणेन विघटन्ते, इत्थं च प्रवर्त्तमानानां तेषां स्वरूपं ब्रह्मणापि निश्चेतुं न शक्यते, अन्तस्तत्त्वं बृहस्पतिनापि नोपलक्ष्यते, जनकेष्वपि चात्मीयभावं न निर्वहन्ति, ततस्त इत्थं चेष्टमाना दृष्टा अपि जनयन्ति भयं प्रथयन्त्युद्वेगं विस्तारयन्त्यरतिं दहन्ति शरीरं हरन्ति सर्वसुखानि निन्द्यन्ते सर्वलोकैः शोच्यन्ते सकलशिष्टैः न भवन्ति कस्यचिदाश्वासपदं न लभन्ते कस्यचिद् गृहद्वारे उपवेशनमात्रमपि, किं बहुना ?, मायोरगीविषार्त्ताः स्थानास्थानाद्यचिन्तया वृत्तिम्। कुर्वन्ति स्खलिता इव पतन्ति नरकोरुगर्त्तासु ॥ १ ॥ उद्वृत्य ततः कुब्जा हीनाङ्गा वामनाः कुरूपाश्च । बहुदुःखा जायन्ते कुत्सिततिर्यग्नरस्त्रीषु ॥ २ ॥ मायोरगीनिवासं दत्वा गृह्णन्ति जन्तवो दुःखम्। स्वयमेवाज्ञानहतो यद्वा कः किं न कुरुतेऽत्र ॥३॥ तस्मा-

द्वत्सा ! इयमप्यतिदुष्टा दूरतो वर्जनीया, तथा क्रियमाणेऽपि यदि कथंचिदभिमुखमापतति तदा मदर्पितेनैवार्जवदण्डेन तथा ताडनीया यथा पुनरपि न दृश्यत इति ॥ अग्रतस्तु परं परमविस्मयाधायकं व्यतिकरान्तरं पश्यत यदेषोऽष्टवार्षिकबालकरूपधारी लोभनामा महापिशाचः पथिकान् विप्रलोभयन् पुनः पुनराह्वयति, विमलबोधभ्रात्रा कीर्त्तिधरेणोक्तं-स्वामिन् ! एष पुनस्तानाहूय किं करोति ?, ततः समयराजेनोक्तं-महानर्थः खल्वेष दुरात्मा, कोऽस्य चेष्टितं युगान्तानामवधिनापि वर्णयितुमलं ?, किन्तु संक्षेपतः किंचिन्निवेदयामि, एष तावत्पथिकानाह्वयति, पथिका अपि पश्यत कथं बालोऽप्ययं पटुवचनो रमणीयाकृतिः, लघुश्चायं किमस्माकं करिष्यति? गत्वा पश्यामस्तावत्किमेष चेष्टत इति कौतुकाद्याकृष्टमनसस्तमुपसर्पन्ति, ततोऽसौ तान् पथिकान्नानाविधक्रीडाविशेषैर्हृतहृदयान् कृत्वा समुत्क्षिप्य स्वकीयस्कन्धे समारोपयति, ततः स्वरूपं प्रकटयँस्तावद्वर्द्धते यावदतिक्रामति पुष्पदन्तौ, लगति ब्रह्माण्डे, प्रक्षिपति चोत्पाट्यात्मनिवासभूतायां मूर्च्छाभिधानप्रेतभूमौ, परिणाययति तान् धनपिपासाभोगतृष्णासंज्ञिते निजदुहितरौ, तेऽपि च वराकाः पथिकास्तद्दुहितरौ प्रकर्षवत्यौ रूपेण समुत्कृष्टे लावण्येन कमनीये अशुभध्यानवदनेन्दीवरेण मनोहारिण्यौ हरिणाद्यवलोकनचिन्तनोपभोगायतलोचनाभ्यां हृदयभुजंगमाकर्षणपरममन्त्रौ द्रविणादिकथाकलभाषितेन कामुकजनकण्ठकठिनपाशौ सचेतनाचेतनवस्त्वभिलापपीनोन्नतकठोरकुचकनककलशाभ्यां प्रेक्षकान्तःकरणसंयमनदृढगुणौ अपदद्विपदादिवस्त्वर्जनप्रवृत्तिकोमलबाहुलतिकाभ्यां रमणीये कुविकल्पनिवहविस्तीर्णोपचितरमणमण्डलेन चाव्यौ विपर्यासकुसंसर्गचरणकदलीस्तम्भाभ्यां मुग्धत्वेन पश्यन्तो हृष्टाः परिणयन्ति, ततः कीर्त्तिधरेणोक्तं-यद्येवं स्वामिस्ताभ्यां सह यथेष्टं क्रीडतां तेषां विषयसुखसिद्धिर्भविष्यति तत्किमिह मुग्धत्वं ?, ततः समयराजेनोक्तं-वत्सा! भवति केषांचित्काचित् ततः सिद्धिः, केवलं सर्वदुःखसिद्धिरेव सा, यतोऽन-

योर्लोभपिशाचदुहित्रोरेकैकापि तत्त्ववृत्त्या विचार्यमाणा विशेषयति विषकन्दलीं लंघयति कृष्णाहिफणासंहतिं अधरयति महादहनज्वालां तिरस्करोति तीक्ष्णक्षुरिकां उपहसति पांशुशूलां वराकीमिव मन्यते खड्गधारां, तथाहि-धनपिपासावशीकृतास्तावद्वराटिकाहेतोरपि घ्नन्ति पितरं हिंसन्ति मातरं परित्यजन्ति बन्धुवर्गं तरन्ति जलधिं समारोहन्ति शैलाग्रेषु विषमेषु भ्राम्यन्त्यपरिपूर्णकामाः सर्वदिक्षु सेवन्ति निन्द्यकुलादिव्यतिकरानपि साधनान् धावन्ति पद्भ्यां कुर्वन्ति चरणाद्युपमर्दनं काष्ठीभवन्ति शीतैः दह्यन्ते रविकिरणैः सहन्ते दुर्भाषितानि ताड्यन्ते कशादिघातैः दीन : पश्यन्ति धनमदमलिनेश्वरमुखानि मुंचंति लज्जां भवन्ति विदूषकाः हासयन्ति धनिनः कुर्वन्ति भण्डविक्रियाः वहन्ति दुर्वोहभारान् जल्पन्त्यलीकानि मुष्णंति मित्राणि हारयन्ति काकिणीव्यतिकरेण कोटिं दीपयन्ति करम्भकशरावेण जतुगृहं नाशयन्त्यल्पेनापि स्वाम्यादिकार्यं लङ्घयन्ति प्रतिज्ञां भंजंति व्रतानि लोपयन्ति सन्मार्गे प्रवर्त्तन्ते गर्हितक्रियासु न गणयन्त्ययशांसि नापेक्षन्ते परलोकं, ततश्च लूष्यन्ते तत्रापि नरेन्द्रैः दूष्यन्ते शिष्टैः मुष्यन्ते तस्करैः सेव्यन्ते वान्दिभिः निकृष्यन्ते दायादैः जाग्रति रात्रिंदिवं न भुञ्जते सुखेन भोगान् न लभन्ते क्वचिदपि रतिं द्विषन्ति शिष्टेभ्यः समुद्विजन्ति गुणिभ्यः अपमानयन्ति वृद्धान्, अवजानन्ति गुरून्, ततो निरङ्कुशाः मुक्तलज्जाः प्रणष्टभया भवन्ति सर्वापदां पदं, विडम्ब्यन्ते विचित्रप्रकारैः, किं बहुना?, द्रविणपिपासावशगा दुर्वहमुपचित्य पापकर्मभरं। तद्भाराक्रान्ता इव पतन्त्यधो विह्वला जीवाः॥१॥वज्रमयैर्विध्यन्ते तोत्रैः तत्राप्यधार्मिकैरनिशं। निःसह्यदुःखनिहताः सुचिरं क्लिश्यन्ति दीनमुखाः ॥२॥निर्गत्य ततोऽपीह क्षीणाङ्गा रोगशोकदुःखार्त्ताः सर्वविभवैर्विमुक्ताः भ्रमन्ति बहुहीनयोनीषु ॥३॥ भोगतृष्णावशीकृताः पुनः पूर्वोपदर्शितशब्दादिवृक्षोपभोगेषु प्रवर्तन्ते, प्रवृत्तानां च यद्भवति तत् पूर्वं निवेदितमेव, तस्मादेषोऽपि लोभपिशाचः स्वहितैषिभिरपकर्णनीय एव, यदि पुनस्तथापि पृष्ठिं न

मुंचति तदा मत्समर्प्पितयैव सन्तुष्टियष्टया शिरसि तथा हन्तव्यो यथा विड्गिकाः प्रयच्छन् दूरेण प्रपलायत इति ॥ अपरं च अमीपामेव क्रोधवनदवमानागिरिप्रभृतीनां निःश्रितं हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुन्नपुंसकवेदनामकं महादुष्टतस्करवृन्दं पथिकानां सदैव वर्त्तिनीं पातयति, तत्र मदीयबोलापकेनैव चाकितैः सर्वदैव लङ्घनीयमिति । एताः पुनरग्रतो याः सालस्यं स्थापयन्ति पदानि निमीलयन्ति लोचनानि घूर्णयन्त्यङ्गानि ताः निद्रा१प्रचला२निद्रानिद्रा३प्रचलाप्रचला४स्त्यानर्द्धि५संज्ञा मोहमहाचरटसत्कदर्शनसंवरणमहामांडलिकेन जगद्व्यामोहनार्थं प्रयुक्ताः पंच कटकनार्यो मन्तव्याः , एताभिश्च व्यामोहितानां जन्तूनामपगच्छति विशिष्टचेतना विस्मरति श्रुतं भ्रश्यति धर्म्मो नश्यन्ति शिष्टप्रदत्तोपदेशरहस्यानि सीदन्ति सर्वकृत्यानि प्रभवन्ति शत्रवः उपतिष्ठन्त्यहिज्वलनतस्कराद्यापदो गलन्ति सर्वसम्पदः, परं तथाऽप्यज्ञानोपहतचेतसो व्यवस्यन्ति, वन्दति च यथा-सुखदः संगमः तासां, कोमलं मधुरं वपुः । एवं च मोहितास्ताभिः, पतन्ति व्यसनोदधौ ॥ १ ॥ तस्मादेता अपि त्याज्या, दूरतः स्वाहितैषिभिः । सर्वत्यागासमर्थैर्वा, त्याज्यास्तावत् प्रयत्नतः ॥ २ ॥ अन्त्यास्तिस्रः सदा ह्येता, दुर्गतिप्रस्थितात्मनाम् । सर्वलक्षणहीनानामत्यन्तगुरुकर्म्मणाम् ॥ ३ ॥ सन्निधानं प्रपद्यन्ते, पंचमी तु विशेषतः । नृणां सम्पद्यते सा हि, प्रायो नरकगामिनाम् ॥ ४ ॥ इयं पुनः पुरतो निःशेषस्यापि मोहराजस्य विजयकर्त्री चतुर्वदना विकथा नाम महायोगिनीति मन्तव्या, एषा ह्येकेन मुखेन राजचिन्तां द्वितीयेन देशचिन्तां तृतीयेन भक्तचिन्तां चतुर्थेनान्तःपुरादिचिन्तां करोतीत्येवं समस्तमपि मोहराज्यं वृद्धिमुपनयति, तदेषापि महादुष्टा दूरतो वर्जनीया, अन्यथा ह्येषा योगशक्त्या जन्तूनां वदनेषु प्रविशति, तत्प्रवेशमात्रादेव च ते कुर्वन्ति नरेन्द्रशरीरकोष्ठागारकरितुरगसामन्तामात्यादीनां निरर्थिकास्तप्तीः स्तुवन्ति निन्दन्ति वा निष्फलमेव परिग्रहाद्युपकल्पितं रसवतीपाकान् विना

प्रयोजनं साक्षेपं प्रशंसन्ति जुगुप्सन्ते वा स्वपरदेशान् असिध्यत्यपि कस्मिँश्चित् निजार्थे विदधति सोद्रेकं द्रविडकर्णाटादिदेशीययोपितां ( ई ) गितस्मितभापितरूपलावण्यविलासादिकथाः विप्रवदन्ते बद्धस्पर्द्धं जल्पन्ति यथेष्टं गमयन्ति दिनानि विप्रकीर्णालापैः कुर्वन्ति पैशुन्यानि उद्घट्टयन्ति सर्वस्यापि मर्माणि प्रणिगदन्ति तत्प्रथमत एव यत् प्राणान्तेऽप्यवक्तव्यं,यदि च हितकाम्यया शिष्टेन केनचिन्निवार्यन्ते तदा केचित्तमेवोपहसन्ति केचिद्विवादेनोपतिष्ठन्ति केचिदवजानन्ति केचित्तु प्रथमतः सर्वं प्रतिपद्य पश्चादात्मीयं मुखं नियन्त्रयितुमशक्तास्तथैवोच्छृङ्खलतया परतप्त्यादिषु प्रवर्त्तमाना दृश्यन्ते, ततस्तेषां राजादिभिश्छिद्यन्ते जिह्वाः लूयन्ते ओष्ठपुटानि पात्यन्ते दन्ताः पिपीलिकादीनां भृत्वा सीव्यन्ते मुखानि उत्पाट्यन्ते भ्रूः निकृत्यन्ते गलप्रदेशाः क्षिप्यन्ते वदनेषु तप्तत्रपूणि क्वचित्तैलादीनि अशुचिद्रव्याणि, किं बहुना?, विकथायोगिनीग्रस्ताः, सम्प्राप्येह विडम्बनाः। नरकाख्येऽपि तत्पीठे, तिष्ठन्त्यसुखिनश्चिरम् ॥ १ ॥ ततो मूका जडाः क्लीबाः, कर्णनेत्रादिवर्जिताः। जिह्वाच्छेदादिदुःखानि, सहन्ते तिर्यगादिषु ॥ २ ॥ वर्ज्यमाना तदेपाऽपि, यदि पृष्ठं न मुञ्चति। शुभध्यानमहामन्त्रान्निग्राह्या मत्समर्पितात् ॥ ३ ॥ अपरे चात्र वने असत्प्रवृत्त्यनार्यक्रियाद्यभिधानासु महापल्लीष्वज्ञानसंशयमिथ्यात्वमिथ्याज्ञानरागद्वेपस्मृतिभ्रंशधर्म्मशैथिल्यनामानो महापल्लीपतयः प्रतिवसन्ति, एपां च सन्निधानेन व्रजन्नमुपितश्चक्रवर्त्त्यपि न गच्छति, जीवग्राहं च गृह्णन्त्येते पथिकान् विडम्बयन्ति चापर्यन्तप्रकारैः, तस्मादेतद्भीरुभिर्मत्सन्निधानं न कदाचिन्मोक्तव्यं, मां विना ह्यमीषां शक्रोऽपि वराक एव, त्रिभुवनमपि तृणमेव-एतद्वनस्वरूपं, तस्मात् कः प्रकटयेन्निरवशेपम्। जानन्ति योगिनोऽपि हि वक्तुं त्वेतेऽपि तदशक्ताः ॥१॥ अत्रान्तरे पुरन्दरकुमारेण चिन्तितंअहो साधु २ भगवता अन्तरङ्गभङ्गया पञ्चप्रकारप्रमादस्तत्समुदायरूपं वनं च समर्थितं, पञ्चप्रकारप्रमादप्रतिपादकं हि-

वचः पूर्वं साधुसमीपं गतेन मया कदाचित् समाकर्णितमेव, यथा-मज्जं विसय कसाया निद्दा विगहा य पंचमी भणिया। एते पंच पमाया जीवं पाडंति संसारे ॥ १ ॥ अन्यत्र क्वचित्पुनरष्टप्रकारोऽपि प्रमादो मया कदाचिदाकर्णित एव, यथा-अज्ञानं संशयो मिथ्या, मिथ्याज्ञानं तथैव च। रागो द्वेषः स्मृतिभ्रंशो, धर्म्मकृत्येष्वनादरः ॥ १ ॥ इति, एषोऽपि भगवता असत्प्रवृत्त्यनार्य-क्रियाद्यभिधानासु महापल्लीष्वित्यादिना दर्शित एवेति विचिन्त्य हर्षोदंचितशरीरः शिरो धूनयंश्चिरं स्थितवान् कुमारः, ततो विजयराजेन विस्मितवदनेन कुमरमुखमवलोक्य चिन्तितं-अहो कुमारः किमपि सम्यगेतदवगच्छतीति, वयं त्वगृहीतसङ्केता एव भगवद्गम्भीरभाषितेषु, परं भवतु तावत् कुमारोऽपि पश्चान्मम सर्वं व्यक्तीकरिष्यति, पुरतः किं तत्र सञ्जातमिति तावद्भगवन्तं पृच्छामीति विकल्प्य प्रोक्तं राज्ञा-भगवन्तः! अग्रतः किं सञ्जातं तत्रेति एतदावेदनेन विधीयतां प्रसादः, ततो भगवता प्रोक्तं-राजन्नेष कथयामि, यथा पूर्वाभिहितमभिधाय किञ्चिद्विमृशति समयराजे विमलबोधभ्रात्रा यशोनिधिनामकेन पृष्टं-स्वामिन्! किमेष पुरस्तात् बहलः कलकलरवः प्रसरति ? येन कर्णेऽपि पतितं किञ्चिन्नाकर्ण्यते, ततः समयराजेनोक्तं-वत्सास्तदेतदग्रतो मोहमहाचरटराजसैन्यं सकलदिक्चक्रमभिव्याप्य समावासितमास्ते, यद्दर्शनार्थं भवतां प्रयासस्तत्सम्बन्धी एवायं महान् कोलाहलः, ततः सर्वैरेव विमलबोधादिभिः सकौतुकं ससम्भ्रमं चोक्तं-स्वामिन्! दर्शय दर्शय क्व तदिति?, ततः समयराजेनाग्रतः कियदपि दूरं तान्नीत्वा सर्वमपि कटकं झगित्येव सामान्यतः तेषां प्रदर्शितमिति, विशेषदिदर्शिषया तु प्रोक्तं-देवानुप्रिया ! अनन्तव्यतिकरसमाकीर्णेऽस्मिन् महाकटके इतः पश्यत तावद् वाद्यन्ते क्वचित्तूर्याणि क्वापि पटुपटहाः क्वचिच्छृङ्गकानि क्वचिदापानकादिषु मुहुरिकाः क्वापि किन्नरिकाः क्वापि ढक्कारिकाः, तथा गीयन्ते सोत्कण्ठं क्वचिद् गीतानि क्वचिद्रासिकाः क्वचिद्धहिकाः क्वापि स्मरचेष्टाप्रधानानि गायनकानि,

तथा दीयन्ते सोन्मादं क्वचिच्चच्चरिकाः क्वापि रेल्लुकका: क्वचिद् वुम्बा: क्वचित्परस्परं मस्तकाघाताः क्वचित् पृष्ठघाताः क्वापि हृदयघाताः, तथा क्वचित् क्रियन्ते (विक्रियाः) क्वचिन्मल्लास्फोटनानि क्वचिद् दूरीकृतलज्जैः परिहासाः क्वचिन्निरर्गलं वल्गनानि क्वचिद्भाण्डचेष्टितानि, तथा योध्यन्ते क्वचित् करिणः क्वचिन्मल्लाः क्वचिद् वण्ठाः क्वचित् कुक्कुटाः, तथा क्रीडन्ति क्वचिद्वराटकैः क्वचित् सारैः क्वचिच्च तुरङ्गेन क्वचिन्नालिकेरभङ्गादिक्रीडया, तथा निरङ्कुशं क्वचिद् धावन्ति क्वचिदुल्ललन्ति क्वचित्कुर्दन्ते क्वचित् प्लवन्ते क्वचिन्नृत्यन्ति क्वापि हसन्ति क्वापि रोदन्ति क्वचित् क्रुध्यन्ति क्वचित् कलहयन्ति क्वचिच्छस्त्रैः प्रहरन्ति क्वचित्परवित्तान्यपहरन्ति क्वचित्परदारेष्वभिरमन्ति, तद्व्यतिकरे च केचित् कारागृहेषु क्षिप्यन्ते केचिद् बध्यन्ते, केचित् करचरणवृषणच्छेदननेत्रोत्पाटनादिभिर्निहन्यन्ते केचित्तु मार्यन्त इत्येवमादिभिर्व्यतिकरैः सर्वः सर्वदैवाकुलोऽत्र लोको, न कदाचिद्विदिततद्वार्तिजनोद्वेगकारिणं कलकलरवं कुर्वन्नुपरमते, ततः श्रेयोरतिना पृष्टं-क्व पुनरसौ स्वामिन्! मोहराजः स्वयं तिष्ठति ?, ततः कियदपि दूरं पुरतः तमुपसृत्य समयराजेनोक्तं-भद्रा यदेतदतीव विपुलमुच्चैस्तरं च कुवासनापटलनामकं पुरतो महागुह्वरं दृश्यते तद्द्वारे चायमकुशलमत्यभिधाना महामण्डपिका समालोक्यते, तदधस्तात् क्लिष्टपरिणामसमुदयाभिधाने महासिंहासने समुपविष्टो राजसतामसभावविस्फारितलोचनाभ्यां भुवनतलमपि कटाक्षयन् शेषाग्रहनिकरानिर्मितप्रलम्बकूर्चं पुनः पुनः करेण परामृशन् अविद्याभिधाननिजकाययष्टिं मुहुर्मुहुर्निरीक्षमाणः सेवागतप्रणतमदनादिमहामाण्डलिकपृष्ठिषु सलीलं करं व्यापारयन्नेष स्वकीयमहास्थानमध्यगतो भवद्भिर्मोहमहाचरटराज इति प्रतिपत्तव्यः। संहरति सृजत्येष, निःशेषभुवनत्रयं। स्ववीर्यदण्डतो विश्वं, भ्राम्यते तेन चक्रवत्॥१॥ सुरासुरमनुष्येन्द्रैर्यस्याज्ञा शिरसा धृता। तस्यास्य मोहराजस्य, को गुणान्

गदितुं क्षमः॥२॥ आसन्नं उपविष्टा च, या स्त्री स्थूलाऽवलोक्यते। सा महामूढता नाम, भार्याऽस्य पृथिवीपतेः ॥ ३ ॥ यस्तु शतपत्रदलदीर्घलोचनाभिः समुन्नतस्तनसमाक्रान्तविनमत्कृशमध्याभिः सङ्कल्पजतल्यायमानसमुचितरमणस्थलविपुलताविनिर्जित-त्रिदशकल्लोलिनीपुलिनाभिर्निःसङ्ख्यतरुणरमणीभिः समुपहसितरतिरमणरूपैः समुज्ज्वलचारुनेपथ्यैः समारब्धविचित्रवैदग्ध्यभ-णितप्रबन्धैश्चारणनरकोटिभिश्चासेव्यमानचरणारविन्दः अनन्तानुबन्धिमायाऽशुभानुबन्धिलोभादिभिरपत्यैः परिवृतः विनिर्दलित-पद्मरागनिकरच्छविः क्षितीशदक्षिणभुजासत्तौ समुपविष्टः समालोक्यते सोऽस्यैव राज्ञः पुत्रो रागकेशरी मन्तव्यः, अनेनाद्भु-तवीर्येण, समाक्रम्य जगत्त्रयं। द्वारेण मोहराजस्य, क्षिप्यमाणं समीक्ष्यताम् ॥ १ ॥ यस्तु त्रिबलीतरङ्गितभालफलकैर्गुञ्जार्ध-शोणनेत्रैर्विगलद्बहलस्वेदाम्बुबिन्दुभि.सदैवान्तःसन्धुक्षितप्रद्वेषधूमध्वजधूममलिनदृष्टिभिः नानायुधव्यग्राग्रहस्तैर्नरयोषिन्निवहैः परि-करितं अनन्तानुबन्धिमानादिभिरष्टभिरपत्यैर्युक्तो मषीपुञ्जप्रभो नृपतेरेव वामभुजासन्नमुपविष्टो दृश्यते सोऽप्यस्यैव राज्ञः प्रथमेन तुल्यसामर्थ्यो द्वितीयपुत्रो द्वेषगजेन्द्रो ज्ञातव्यः, यस्त्वेतदनन्तरं कृष्णो वर्णेन भीषणः स्वरूपेण क्रूरश्चित्तेन परुषो वचसा दारुणः क्रियया वक्रेण चक्षुषा समग्रराजकं वीक्षमाणः समुपविष्टो विलोक्यते सोऽप्यस्यैव नृपतेः मिथ्यादर्शननामा महामहत्तमो विज्ञेयः, अस्य च यद्वीर्यं तदाख्यातुमपि न पार्यते, केवलं सङ्क्षेपतः किंचिदुच्यते-अदेवे देवसङ्कल्पमधर्म्मे धर्म्ममानिताम् । अतत्त्वे तत्त्वबुद्धिं च, विधत्ते सुपरिस्फुटम् ॥ १ ॥ अपात्रे पात्रतारोपमगुणेषु गुणग्रही । संसारहेतौ निर्वाणहेतुभावं करोत्ययम् ॥ १ ॥ तथाहि-हसितोद्गीतविब्बोकनाट्याटोपपरायणाः । हताः कटाक्षविक्षेपैर्नारीणां दासतां गताः ॥ १ ॥ मायाविनो महा-क्रोधाः, सायुधा वैरिघातिनः । ईदृशा अप्यहो देवा, लोकेऽनेन प्रतिष्ठिताः ॥ २ ॥ रागद्वेषविनिर्मुक्ताः, सर्वज्ञाः शान्तचेतसः ।

समाः शत्रौ च मित्रे च, स्त्रीसङ्गपरिवर्जिताः ॥ ३ ॥ आयुधारोपनिर्मुक्ता, मायामात्सर्यवर्जिताः । अनेनाच्छादिता देवा, ईदृशोऽपि दुरात्मना ॥ ४ ॥ तथा-क्षणध्वंसी विभुर्नित्यो, ललाटस्थो हृदि स्थितः । आत्मेति ज्ञानमात्रं वा, शून्यं वा सचराचरम् ॥ ५ ॥ पंचभूतविवर्त्तो वा, जगदित्येवमादि यत् । प्रमाणबाधितं तत्त्वं, मुग्धलोकप्रतारकम् ॥ ६ ॥ सद्बुद्धिर्जन्यते तत्र, मिथ्यादर्शनमन्त्रिणा । शुद्धं जीवादितत्त्वं तु, दुरात्माऽयमपह्नुते ॥ ७ ॥ तथा-गृहिणो ललनाऽवाच्यमर्दका भूतघातिनः । असत्यसन्धाः पापिष्ठाः, सङ्ग्रहोपग्रहे रताः ॥ ८ ॥ तप्तायोगोलकाकारास्तथापि यतिमानिनः । ये तेषु कुरुते भद्राः, पात्रबुद्धिमयं जने ॥ ९ ॥ सर्वजन्तुहिताः शान्ताः, वाङ्मनःकायसंयताः । मायाऽहङ्कारमात्सर्यनिर्मुक्ता ब्रह्मचारिणः ॥ १० ॥ सम्यग्ज्ञानधरा धीराः, सर्वसंगविवर्जिताः । ये तेष्वपात्रताबुद्धिप्रदोषौ जनयत्ययम्॥ ११ ॥ तथा-कौतुकं कुहुकं मन्त्रमिन्द्रजालं रसक्रियाम् । निर्विषीकरणं तन्त्रं, निमित्तं च शुभाशुभम् ॥१२॥ ज्योतिषं गणितं चूर्णं, चिकित्साद्यपराण्यपि । पापशास्त्रोपदिष्टानि, भूतघातकराणि च ॥१३॥ ये प्रयत्नेन शिक्षन्ते, निःशङ्काश्च प्रयुञ्जते । तानेव गुणिनः पूज्यान्, जने प्रख्यापयत्यसौ॥१४॥ ये पुनर्मन्त्रतन्त्रादि, विदन्तोऽप्यतिनिस्पृहाः । निवृत्तास्तत्प्रयोगेभ्यो, धर्म्मातिक्रमभीरवः ॥१५॥ कोपाहङ्कारलोभाद्यैर्दूरतः परिवर्जिताः । स्वाध्यायध्यानयोगेषु, सक्तचित्ताः सदा श्रुते ॥१६॥ ते निर्गुणा अलोकज्ञा, ज्ञानहीनाश्च कुर्कुटाः । इत्येवं ख्यापिता लोके, मिथ्यादर्शनमन्त्रिणा ॥१७॥ तथा-निम्नगादिजलैः स्नानं, घातनं पशुसंहतेः । उद्वाहनं च कन्यानां, तिलादिदहनं तथा ॥ १८ ॥ पञ्चाग्नितपनं पातो, हुतभुग्भैरवादिषु । दानं लोहहलादीनां, कामशास्त्रप्रवर्त्तनम् ॥ १९ ॥ कुटुम्बपालनं यत्नाद्, गवाश्वत्थादिवन्दनम् । नक्तंभोजनमित्यादि, भूतघातनिबन्धनम् ॥२०॥ संसारकारणत्वेन, निश्चितं यन्मनीषिभिः । प्रत्यक्षादिविरुद्धं च, तत्रायं निजवीर्यतः ॥२१॥

मोहराजमहामन्त्री, धर्म्मकारणतामतिम्। लोकानां कुरुतेऽत्यर्थं, तदस्य कथयाऽप्यलं ॥ २२ ॥ कुदृष्टिनामकं त्वस्य, यत्कलत्रमिदं पुरः। वागीशोऽपि न सामर्थ्यं, तस्य वर्णयितुं क्षमः ॥ २३ ॥ यन्मार्गा नास्तिकादीनां, घोरसंसारहेतवः। अनयैव सृष्टाः सर्वे, युक्तिलोकविरोधिनः॥२४॥ यः पुनः समस्तजगज्जन्तुहृदयनिर्भेदनक्षमपञ्चशरव्यतिकरव्यग्रहतः पृष्ठपीडिततूणीरः समीपीकृतमहाचापः समस्तलीलाविलासविब्बोकवसतिः स्त्रीवेदपुरुषवेदनपुंसकवेदाभिधानसेवकत्रयसंवाह्यमानशरीरः क्षितीशप्रणिपातानन्तरं रागकेशरिणं पुरस्कृत्योपविष्टो दृश्यते स मदननामा महामाण्डलिको द्रष्टव्यः, अस्य च किं वर्णयामो ?, यतः सोऽपि त्रिपुरान्तकृद्दापितोऽनेन हठाद् गौर्याः शरीरार्द्धं कारितः केशवोऽपि गोपीनां पादवन्दनं प्रापितो ब्रह्माऽप्यप्सरोऽवलोकनविधौ चतुर्वक्त्रसम्पदं प्रवर्त्तितः शक्रोऽपि रतिकलहप्रकुपितशचीप्रसादनपटुकोटीघटनासु धारिताश्चक्रिणोऽपि शिरसा निजाज्ञां, शेषसुरमानवानां तु का वार्त्ता?, तथाहि-स्वकान्त्या सर्वतेजांस्यभिभवन् प्रधानपुद्गलनिर्मितशरीरः कश्चित् कदाचिद् द्वादशकल्पादिसुरोऽपि प्रकुपितेनैतेन स्वबाणैस्ताडितो विह्वलः कृत्याकृत्यान्यपश्यन्नशुचिमूत्रांत्रजम्बालापूरितहतमनुजयोषिच्छरीरकेऽपि कायप्रवृत्त्याऽभिरमते, केचित्तु देवा एतेन जगद्वैरिणा प्रेरिताः पश्यन्तोऽपि बह्वपायान् परसुराङ्गना अपहृत्य तमस्कायादिषु विलीयन्ते, ततस्तद्व्यतिकरे वज्रादिताडिताः प्रभूतादिनानि वेदनानिवहमधिसहन्ते, मानवेष्वपि केचिदेतच्छिलीमुखमर्पिताः क्षिप्यन्ते रतौ दह्यन्ते गात्रेषु मुञ्चन्ति दीर्घनिश्वासान् भवन्ति मन्त्रमूलकाद्यविषयाः समालिङ्ग्यन्ते शून्यतया व्यग्रीक्रियन्तेऽलीकचिन्तया गृह्यन्ते ग्रहेण जल्पन्त्यसम्बद्धानि प्राप्यन्ते महाज्वरेण पतन्त्यनाख्येयवेदनासमुदये, ततो महाकुलप्रसूता अपि तद्वेदनोपशमभ्रान्तितो विमुक्तलज्जा मातङ्गाद्यङ्गनासङ्गेष्वपि प्रवर्त्तन्ते, तत्प्रवृत्तौ च कदर्थ्यन्ते अत्रापि नानाविधविडम्बनाभिः परिह्रियन्ते

सर्वलोकैः न स्पृश्यन्ते चरणमात्रेणापि न निरीक्ष्यन्ते केनचिद्वक्रदृष्टिप्रेपणेनापि निन्द्यंते जनैः शोच्यन्ते स्वयमेव पश्चात्तापैः भ्रश्यन्ते सर्वसम्पद्भ्यः प्राप्नुवन्ति विपल्लक्षाणि, ततः पतन्ति महानरकेषु, तत्र चाश्लिष्यन्ते तप्तताम्रादिमयपुत्रिकाः क्षिप्यन्ते ज्वलच्चितासु अनुभवन्ति प्रभूतकालं नानादुःखानि, केचित्तु स्मरशबरशरव्यतिकरजर्जरिताः कृमिवल्लुठन्ति विटकोटिनिघृष्टपण्याङ्गनायोनि निर्द्धमनेषु, ततस्तद्रक्तचेतसो ददति बहुपुरुषपरम्परासञ्चितं समस्तमप्यर्थजातं, ततो महर्द्धयोऽपि भवन्ति रङ्कप्रायाः, तथा हितैषिभिर्युक्तिलक्षैर्निवार्यमाणा अपि न निवर्त्तन्ते, पुनरपि च मातरमपि मुषित्वा चौर्यमपि कृत्वा ईश्वरगृहादिषु दुष्कर्म्म-करणादिकष्टान्यपि सोच्छ्वासमासाद्य काँश्चिद् धनलवांस्तत्रैवावर्त्तयन्ति, अथैवं मन्मथेनोन्माथिताश्च तासां भवन्ति दासवत्, तथाहि-प्रक्षालयन्ति पादान् संवाहयन्ति शरीराणि भक्षयन्ति तदुच्छिष्टानि सहन्ते पार्ष्णिप्रहारान् मर्षन्ति मस्तकाघातान्, किमत्र बहुजल्पितेन?, ये केचिन्मुनयो धीराः, साभिमानाः कलाविदः। माहात्म्यं तेऽपि मुञ्चन्ति, स्मरास्त्रैः शल्यिता हृदि ॥१॥ ततो विडम्बनालक्षैः, स्त्रीनिमित्तैरिहैव ते। विडम्बिताः परत्रापि, पच्यन्ते नरकाग्निषु ॥ २ ॥ ततोऽप्युद्वृत्य जायन्ते, षण्ढा रूपविवर्जिताः। दरिद्रा दुर्भगाः क्लीबा, दुःखलक्षैकभाजनम् ॥ ३ ॥ ततः पुण्यमानसेन पृष्टं-स्वामिन्! स्त्रीवेदाद्यात्मीयपरिजनसहित एवायं सर्वमेतत् करोत्याहोश्विदन्योऽप्यत्र कटके कश्चित् सामन्तादिरेतत्साहाय्ये व्याप्रियते ?, ततः समयराजेनोक्तं-वत्स! दुरात्मनाममीषामपूर्वैव काचित् संहतिः, यतो यत्रैकः सन्निधीयते तत्र प्रायः सर्वेऽपि सन्नह्य ढौकन्ते, परं तथापि मदनस्य हरगलगवलमषीपुञ्जच्छविर्भीषणाकृतिर्योऽस्यैव सन्निधावुपविष्टो विपर्यासनामा सामन्तो दृश्यते विशेषतः साहाय्ये सदैव वर्त्तते, तथाह्येतत्सहायस्य, मदनस्य विजृम्भितम्। यत् तन्निवेद्यते तुभ्यं, विशेषेण किमप्यदः ॥ १ ॥ जराजीर्णकपोला ये, हास्यप्रायाश्च योषिताम्। वलिप-

लितखालित्यबीभत्सतनुसंयुताः ॥ २ ॥ तेऽपि त्रपन्ते जरसा, विकाररसनिर्भराः । कथयत्यात्मनो जन्म, गाढमित्वरकालिकम्॥३॥ अनेकद्रव्ययोगैश्च, कात्स्न्यें सम्पत्तये किल। तमसेव स्वहार्देन, रञ्जयन्ति शिरोरुहान् ॥ ४ ॥ जनयन्ति मृजां देहे, नानास्नेहैर्मुहुर्मुहुः । तथा कपोलशैथिल्यं, यत्नतश्छादयन्ति ते ॥ ५ ॥ भ्रमन्ति विकटं मूढास्तरुणा इव लीलया । क्लिश्यंते राढया नित्यं, देहमण्डनतत्पराः ॥ ६ ॥ आहूतास्तात तातेति, ललनाभिस्तथापि ताः। पितामहसमास्सन्तः, कामयन्ते विमूढकाः ॥७॥ सर्वस्याः प्रेरणास्थानं, सन्तोऽपि नितरां पुनः । कुर्वन्ति हास्यविब्बोकान्, गाढं गच्छन्ति हास्यतां ॥ ८ ॥ जराजीर्णशरीराणां, येषामेषा विडम्बना । ते भद्रे सति तारुण्ये, कीदृशाः सन्तु जन्तवः? ॥९॥ श्लेष्मांत्रमूत्रजंबालपूरितं ते कलेवरे । आसक्तचित्ताः खिद्यन्ते, यावज्जीवं वराककाः ॥१०॥ आयतिं न निरीक्षन्ते, देहतत्त्वं न जानते । आहारनिद्राकामार्त्तास्तिष्ठन्ति पशुसन्निभाः॥११॥ततस्तेषामपारेऽत्र, पतितानां भवोदधौ । निर्नष्टशिष्टचेष्टानां, पुनरुत्तरणं कुतः?॥ १२ ॥ तदित्थं तावद्विपर्यासासामन्तो मदनस्य साहाय्ये व्याप्रियते, केवलोऽपि चासौ महादुष्टः खलु विपर्याससामन्तो जनयत्यधर्म्मेऽपि धर्म्माग्रहं अभक्ष्येऽपि भक्ष्याभिनिवेशनं अपेयेष्वपि पेयप्रतिबन्धं अवक्तव्येऽपि वक्तव्यबुद्धिं अकृत्येऽपि कृत्यनिश्चयं, किं बहुना ?, एतद्वशगजन्तूनामाग्रहग्रस्तचेतसाम् । वर्त्तन्ते सर्वकार्येषु वैपरीत्येन बुद्धयः ॥१॥ प्रबोधिता न बुध्यन्ते, युक्तायुक्तं न जानते । स्वाग्रहं नैव मुञ्चन्ति, जीवितातिक्रमेष्वपि ॥२॥ पतन्ति व्यसनाम्भोधौ, ततस्तेऽत्रैव जन्मनि । परत्र दुर्गतिं यांति, ज्ञानबोधिविवर्जिताः ॥३॥ एवमपरेऽप्यत्र देवानुप्रिया! मिथ्याभिमानहर्षमदमात्सर्यदम्भकलहप्रेमोन्मादकालुष्यधर्म्मविद्वेषज्ञानसंवरणदर्शनसंवरणवेदनीयायुष्कनामगोत्रान्तरायप्रभृतयः सामन्ताः पापविलसितसेनाधिपं पुरस्कृत्योपविष्टा द्रष्टव्याः, एतानि च मूढताऽविवेकिताऽक्षमाऽसूयातृष्णाकृपणताजडतागृद्धिभवाभिन-

न्दिताप्रभृतीनि रागकेसरिप्रमुखानां यथासम्भवं कानिचित् कस्यचित् कलत्राणि मन्तव्यानि, एते तु ममत्वाहंकारादयः सिन्धुराः अशुभा मनोवाकाययोगास्तुरंगमाः कुविकल्पाभिधानाः स्यन्दनाः संक्लिष्टपरिणामचापलतुच्छत्वादयः पदातयः, एतस्मिंश्च कटके प्रतिवस्तु वीर्यमायुःसमाप्त्याऽपि वर्णयितुं न पार्यते, तस्मात् सर्वस्य विश्वस्य, सन्तापैकनिबन्धनम् । जरामरण-रोगादिसर्वदुःखैककारणं ॥ १ ॥ विज्ञेयमिदं कटकं, छिद्रान्वेषणतत्परम् । निर्निमित्तं महाशत्रुस्वरूपं सर्वदेहिनाम् ॥ २ ॥ ततो दृष्टं न मोक्तव्यमेकमप्यस्य मानुषम् । तथा कथंचिद्धंतव्यं, दृश्यते न पुनर्यथा ॥ ३ ॥ ततो विमलबोधेनोक्तम्-स्वामिन्! एते पूर्व-मस्माभिरात्मनः समीपे धाव्यां गताः सर्वेऽपि दृष्टाः अत्रापि च सर्वेऽपि दृश्यन्ते तत् किमत्र तत्त्वं ?, ततः समयराजेनोक्तं-वत्सा ! अन्तरङ्गलोकाः खलु अमी नानारूपाणि कर्त्तुं जानन्ति ततः सर्वत्र स्वर्गमृत्युपातालेषु स्वच्छन्दं विचरन्ति, स्वामिन्! कियन्तं पुनः कालमत्र कटकास्थित्यास्तिष्ठताममीषां ?, समयराजः प्राह-अनन्तकालादारभ्य, कस्योपरि पुनरिदं कटकं ?, सद्बोधमहामन्त्रिणः, किमर्थं ?, श्रूयतां कथयामः- समस्त्यस्यामेव मनोभूमौ तावदाकरो निःसङ्ख्यगुणरत्नानां निवासभूमिः सर्वविद्यानां निलयः सर्व-प्रजानां अध्यवसायसंततिर्नाम नगरी, नासौ गुणी न च श्रीमान्, ब्राह्मणः क्षत्रियो वणिक् । यो नैव निवसत्यस्यां,विशालायां महापुरि ॥१॥ तस्यां च संसारिजीवो नाम राजा, स च तत्त्वतो भोक्ताऽपि सर्वभावानां नायकोऽपि समस्तभूमीनां अनन्तोऽपि वीर्येण अचिन्त्योऽपि माहात्म्येन अपरिमितोऽपि प्रभावेन अनुत्तरोऽपि बुद्ध्या अद्वितीयोऽपि दक्षत्वेन असाधारणोऽपि नयमार्गज्ञत्वेन मत्त इव मूर्च्छित इव ग्रहगृहीत इव न चेतयत्यात्मानं न चिन्तयति निजगृहं न गणयति स्वभूतिक्षयं न जानात्यात्मनस्त्रिभुवनाधि-पत्यभ्रंशं, ततस्तिरस्करोति भक्तमनुरक्तमेकान्तहितं च चारित्रधर्म्मसैन्यं,स्वीकरोत्येव तावदेकान्तेन सर्वानर्थकारणं मोहमहाचरटकटकं,

ततः प्रविष्टमात्रेणाप्यमुना लुण्टाककटकेनैषा नगरी निर्दह्य नीयतेऽङ्गारशेषतां मुष्यन्ते संसारिजीवविभूतयः, भवति च सर्वोऽपि तन्निवासी लोकोऽपहृतसर्वस्वः परिभ्रष्टमाहात्म्यः कश्चिच्छिद्यते कश्चित्तु भिद्यते कश्चिद्विध्यते कश्चित्सेध्यते कश्चिद्विदार्यते कश्चिदुत्कृत्यते कश्चिन्मार्यते, ततः कोऽपि क्रन्दति कोऽपि प्रलपति कश्चित्परिदेवते कोऽप्यनवरतं शोचयति, किं बहुना ?, सर्वेऽप्यनर्था जायन्ते, मोहराजस्य संगमात् । संसारिजीवराजोऽयं, तथापि न निबुध्यते ॥ १ ॥ ततः किंचित् सद्बोधमंत्रिणा कर्णजापे दत्ते चेतयत्यात्मानमसौ राजा प्रवेशयति स्वनगर्यां चारित्रधर्मसैन्यं निर्द्धाटयति दूरं मोहराजादितस्करान् , ततः पीयूषसिक्तेव, पुरीयं जायतेऽखिला । प्रजाः सर्वत्र मोदन्ते, वर्द्धन्ते राजसम्पदः ॥ १ ॥ ततः पुनरपि कदाचिदज्ञाननाम्ना मोहराजदूतेन समागत्य कस्मिँश्चित् कुवासे समुत्पादिते समुत्पन्नवैकल्यः संसारिजीवनृपो निष्काशयति चारित्रधर्मकटकं स्वीकरोति मोहराजादितस्करवृंदं, ततः सम्पद्यते तदेव दौस्थ्यमिति ते दरास्ते च मेढकाः, ततः पुनरपि सद्बोधमन्त्रिणा तस्करा निष्काश्यन्त, इत्येवमन्योऽन्यं वैरे प्रवर्धमाने अन्यदा निर्मूलत एव सद्बोधमन्त्रिणा समुन्मूलिते नास्त्यस्माकं क्वापि सुखमित्येवं मोहराजादिभिः पर्यालोच्य विहितं तस्योपरि सरोषैः कटकं, सोऽपि मंत्री प्रणश्य चारित्रधर्मकटके प्रविष्टो, युद्धं चानयोः कटकयोरनन्तवाराः सम्पद्यते, यस्मिंश्च पक्षे संसारिजीवस्तस्य जयः पूर्वोक्तनगर्यां प्रवेशः, परस्य तु विपर्यय इत्येवमनंतकालादारभ्य वर्तत इति, बह्वत्रामीषां सम्बंधि चरितं, तच्च कथयतामप्यायुः परिसमाप्यते, शुभपरिणातिपुत्राश्च भवंतः, ततो दिग्मात्रेऽप्यस्मिन् कथिते शेषं स्वबुद्ध्याप्यभ्यूह्य वत्साः ! स्वहितं यद् भवति तदाचरणीयमिति । तदेवं सकरुणमुपदिश्योपरते समयराजे सविनयं सगद्गदाक्षरमभिहितं विमलबोधादिभिः, यथा- दर्शितं स्वामिनाऽस्माकममृतं गरलं तथा । न च मन्दोऽपि

पीयूषं, मुक्त्वा भुंक्ते विषं क्वचित् ॥ १ ॥ तथापि कर्म्मदोषेण, प्रमादाज्ञानदोषतः। मुक्त्वा चारित्रभूपालं, प्रमादवनसम्मुखं ॥१॥ यथा मनोऽपि नास्माकं, कदाचिदपि गच्छति। प्रयतध्वं तथा स्वामिन्!, प्रसादं प्रविधाय नः॥२॥तदेवं तैरभिहिते सविशेषसमुल्लसत्-करुणारसार्द्रीभवन्मानसेन समयराजेन विमलबोधस्य विशेषवर्त्तीं योग्यतामालोक्य स्वगतमावेदितं सर्वमपि जिनवचनमहामन्त्र-रहस्यं, परिणतं च तस्य तत् सम्यक्, ततो व्यवस्थापितोऽसौ समयराजेन शमजलधिप्रभृतीनां शेषतद्भ्रातॄणां नायकत्वेन, प्रदत्ता च शिक्षा, यथा वत्स! विमलबोध! त्वद्भ्रातरः सर्वेऽप्येतेऽद्यप्रभृति तव शिष्याः, ततो यथा मयाऽनुवर्त्तितास्तथा सम्यगनुवर्त्तनीयाः, तथा युष्माकमपि वत्सा इतःप्रभृत्येष एष विमलबोधो गुरुः, स च यथाऽहं भवद्भिः समाराधितस्तथा सम्य-गाराधनीयः, अपरंच-अप्रमत्तैः सर्वदैव कर्त्तव्यो विधिना मत्प्रदत्तजिनवचनमंत्रजापः, स चायं विधिर्यथा- जेतव्या क्षुत् परिस-हनीया पिपासा सोढव्यं शीतं न गणनीयमौष्ण्यं न निवारणीयाः स्वदेहाद्दंशादयः परिधापनीयान्यवमवस्त्राणि न कर्त्तव्या महाऽऽप-त्स्वप्यरतिः दूरतस्त्याज्यः स्त्रीसंगः विहर्त्तव्यमप्रतिबद्धमानसैः स्थातव्यं श्मशानादिषु सर्वभयविप्रमुक्तैः सेवनीयाः स्त्रीसंगादि-दोषरहिता शय्या न समुज्ज्वलनीयमाक्रोशवधयातनासु न दैन्यं प्रलंबनीयमलाभेषु न कर्त्तव्यमार्त्तं रोगेषु नोद्वेजनीयं परुषस्प-र्शेभ्यः न विधातव्यः सूक्ष्मोऽपि शरीरोपधिसंस्कारः भाव्यं समचित्तैः पूजापमानेषु भवितव्यमनुत्सेकैः प्रज्ञादिगुणेषु न विपरिण-मनीयमतिशयज्ञानानुत्पत्त्यादिषु न वर्त्तितव्यं शंकाकांक्षादिषु, अपरं च समाचरणीयानि चतुर्थषष्ठाष्टमादितपांसि स्थातव्यमूनो-दरितया ग्राह्यं द्रव्यक्षेत्रकालभावाभिग्रहैर्भैक्ष्यं यापनीयं रूक्षप्रान्ताहारैः सहनीयान्युत्कटुकत्वगोदोहिकाद्यासनकेशोत्पाटनादिक-ष्टानि वर्त्तितव्यमिन्द्रियकषायादिसंलीनतया चरणीयं वितथाचरणेषु प्रायश्चित्तं भाव्यं सर्वथैव विनयवैयावृत्त्यैकरसैः यतितव्यं

वाचनादिषु आसितव्यं सदैव शुभध्यानेन, न च विधेयं स्वदेहेऽपि ममत्वं, गुरुमनापृच्छय न कदाचित्कर्त्तव्यमुच्छ्वासनिश्वासा-न्तरेणापरकार्यं, ततः प्राणिदयासत्यस्तेयवर्जनब्रह्मचर्याकिंचन्यादिगुणोपेतानां यथोक्तविधिना मंत्रजापं कुर्वतां प्रतिसमयं क्षय-मुपयास्यन्त्यमी दुष्टतस्कराः, न च स्वप्नेऽपि प्रमादवनाभिमुखं सम्पत्स्यते गमनं, परितोषं गमिष्यति च चारित्रधर्म्मक्षितीशः, ततोऽनेन परमप्रकर्षं गच्छति मंत्रजापे सर्वथा क्षयमेष्यति सपुत्रपौत्रो मदनमण्डलिकादिपरिकरसहितो मोहमहाचरटः, तदनंतरं च झगित्येव विलीय विवशाः कीनाशमुखं प्रवेक्ष्यंति सपरिकरा ज्ञानसंवरणदर्शनसंवरणान्तरायनामानः सामंताः, ततः कियंतमपि कालं विश्रम्य परोपकारसिद्धयर्थं च लोकानां तस्करदुष्टतां प्रख्याप्य समुचितसमये शैलेश्यवस्थामहागदया वेदनीयायुष्कनाम-गोत्राभिधानतस्करसामंताः सपरिकराः सर्वथा चूर्णयित्वा वार्त्ताशेषतां नेतव्याः, एवं कृतेऽतीवपरितुष्टश्चारित्रनृपतिः पूर्वोप-वर्णितस्वरूपां निर्वृतिनगरीं प्रसादेन दास्यति. तत्र च प्राप्ता भवंतोऽशृण्वंतो वार्त्तामपि दुःखस्य दधानास्त्रिभुवनशिरःशेखरत्वं अनुभवंतो निरुपमानं तत्स्वाभाविकं सुखं चक्रविन्यस्तघटवत् कुलालैरिव मोहादितस्करैरनुसमयमेव भ्राम्यमानं नानाविडम्बना-भिर्विडम्ब्यमानं च करतलस्थापितमुक्ताफलवान्निखिलाविष्टपत्रयं प्रतिसमयमालोकयन्तोऽनंतकालं मोदमानाः स्थास्यथ, तदेवं लेशतो दुःखं, भवतां तस्करोद्भवम् । चारित्रधर्म्मसम्भूतं, सुखं च प्रकटीकृतम् ॥ १ ॥ तत्क्षयावाप्त्युपायश्च, कश्चिदेष प्रदर्शितः । तदत्र स्वहितं यत् स्यात् , कार्यं तद् वत्सकैः सदा ॥१॥ तदेवं सर्वमुपदिश्य महाराजः गतः समयराजः स्वसमीहितं किंचिद्देशांतरं, तेऽपि विमलबोधादयो लिखितमिव बद्धमिव स्तम्भितमिव समुत्कीर्णमिव स्यूतमिव निखातमिव कीलितमिव समयराजस्यादेशं परमोपकारित्वं च सर्वदैव चेतसि धारयंतश्चारित्रनृपतिना सह विचरंति नानादेशेषु , ततश्च समयराजोपदिष्टमनुष्ठानं

विधिवत् सम्पादयता विमलबोधेन तावन्नीताः क्षयं सपरिकरा एव मोहराजज्ञानसंवरणदर्शनसंवरणांतरायनामानो बलिष्ठास्तस्करनायकाः, ततस्तैराच्छाद्य यत्पूर्वं विधृतमासीत् समस्तत्रिलोकीतलसाक्षात्करणदक्षं समुन्मीलितं तत् तस्य केवलज्ञानं, ततः समागतास्त्रिदशा विरचितं सुवर्णकमलासनं विहितो महामहिमा-मिलितो भक्तिकौतुकाद्याक्षिप्तचित्तोऽतिप्रचुरो लोकः, कृता च विमलबोधेन तस्करोच्छेदकारिणी चारित्रधर्म्मक्षितीशपक्षपातविधायिनी च सद्देशना, ततः प्रपन्नो बहुभिर्विमलबोधाद्याचीर्ण एव मार्गः, तिरस्कृताः सुदूरेण तस्कराः, ततोऽन्येष्वपि बहुषु प्रदेशेष्वित्थमेव च तस्करविडम्बनाभ्यः प्रभूतलोकं विमोचयन् सम्प्रति महाराज ! युष्मदीयं सग्रामनगरमपि देशं तैर्मोहमहाचरटादिभिर्लूष्यमाणं दृष्ट्वा समुत्पन्नकरुणापरिणामः स एष विमलबोधोऽहममीभिः साधुभिः परिवृतोऽत्र समायातः, तस्माद्यथोक्तचौराणां, संहतेर्घातसिद्धये। पूर्वोक्तकुलसम्भूताः, कष्टान्येतानि साधवः ॥ १ ॥ सहन्ते, तदत्र पृष्टं युष्माभिर्यत्तत् सर्वं निवेदिम् । एतदाकर्ण्य यद्युक्तं, तत्कुरुष्व नराधिप ! ॥२॥ एतद्वचःश्रवणानन्तरमेव त्रिवलीतरङ्गितभालफलकः प्रविगलद्बहलप्रस्वेदबिन्दुरनवरतस्फुरदधरपल्लवः प्रकम्पमानकाययष्टिर्गुञ्जार्धशोणभीषणेक्षणः क्षुरिकायां करं प्रक्षिपन् उत्थितः प्रकुपितो वेगेन विजयसेनक्षितीशः, साक्षेपं भणितवांश्च, यथा-भो भो मन्त्रिणः सामन्ताः किमद्यापि विलम्ब्यते ? शीघ्रं सज्जीभवत गृह्णीत दुष्टतस्करशीर्षाणि प्रक्षिपत मोहमहाचरटादीन् दीर्घशल्यासु निष्पीडयत मदनादीन्निबिडयन्त्रेषु, अहमप्येतैरितरनराधिपतुल्यतया गणितः, तत् नूनममीषां मदीयं माहात्म्यमश्रुतपूर्वं वर्त्तते येन मदीयसीमामप्यतिक्रामन्त्येते, तस्मात् प्राप्नुवन्त्वद्य पापिष्ठाः स्वदुर्णयस्य फलं, जानन्तु मदीयस्वरूपं, भवतु निश्चौरकण्टकं जगदिति, तदेवं कोपेन पारवश्यमुपगतं दृष्ट्वा किंचिद्विहस्योत्थाय च पितरं बाहुदण्डेन गृहीत्वा प्रोक्तं पुरन्दरकुमारेण-

तात ! पर्याप्तमत्र सम्भ्रमेण, अन्तरङ्गतस्करलोकाः खल्वमी, न भवत्सामन्ताद्युपक्रमगम्याः, किन्त्विदानीमेवैतत्सूरिसमादिष्टोपक्रमसाध्या एव, अपरंच-स्वर्गे शक्रः क्षितौ चक्री, फणीशोऽपि रसातले। मुषितो यैर्भवेत्तेषां, का गणना भवादृशैः? ॥ १ ॥ तस्माद्विधाय प्रसादमुपविश्यतां तावत्, ततो राजा सविलक्ष्यं दिशो निरीक्षन् तथैवोपविश्य च क्षणमेकं स्वस्थीभूय पुरन्दरकुमारं प्रत्यभिहितवान् यथा वत्स ! यद्येवं तर्हि न मया कश्चित्तथाविधोऽस्य मुनीन्द्रगम्भीरभाषितस्यार्थोऽवगतः, त्वया पुनरयं सर्वोऽप्यवगत इव लक्ष्यते, तस्मात्त्वमेव तं ज्ञापय यथा वयमपि भवामः कृतार्थाः, ततः पुरन्दरकुमारेणोक्तं-तात ! स्फुट एवास्य मुनीश्वरस्य सर्वोऽपि वचनविन्यासस्तथापि यदि क्वचिदगृहीतसंकेततया भवतां सन्देहस्तर्हि पुनरपि स्वबोधानुसारेणाहमपि किञ्चित् कथयामि, एवमभिधाय पुरन्दरकुमारेणादित एवारभ्य सर्वोऽपि भावार्थः पित्रे निवेदितः, ततः सम्यगवगते तस्मिन् विजयसेनराजः संवेगभरापूरितहृदयः पुरन्दरकुमारमवादीत्-यथा साधु २ वत्स ! तव प्रज्ञा यया सम्यगनुगृहीतोऽस्मि, सर्वमवगतामिदं यथाऽन्तरङ्गार्थगर्भमस्मादृशां मूढजन्तूनां प्रबोधाय स्वकीयमेव चरितं भगवता कथितं, परं वत्स ! समयराजत्वेन कोऽत्र विवक्षितः?, ततः पुरन्दरकुमारेणोक्तं-तात ! सम्यगहमपि न जानामि, ततः केवलिना प्रोक्तं-राजन् ! समयराजः सर्वज्ञसिद्धान्तः, तदभेदोपचाराच्छ्रुतजलधिपारगतः शमनिधिनाम्ना आचार्योऽत्र समयराजत्वेन विवक्षितः, ततो राज्ञा प्रोक्तं-स्वामिन् ! अवगतं तर्हि सर्वं युष्मत्प्रसादतः, अत्रान्तरे समुच्छलत्संवेगरसभरार्द्रीभवन्मानसेन शिरोविन्यस्तकरकुड्मलेन विमलबोधकेवलिनं प्रत्यभिहितं पुरन्दरकुमारेण, यथा-श्रुत्वा स्वामिन्वदः सर्वं, दुष्टतस्करचेष्टितम्। एतद्विडम्बनाभीरुर्नाहं क्वापि रतिं लभे ॥१॥ तस्मादनुग्रहं पूज्या, ममापि यदि कुर्वते। तद्घातकमनुष्ठानं, चिकीर्षेऽहमपि प्रभो! ॥ २ ॥ ततः केवलिना प्रोक्तं, युक्तमेतद्भवादृशाम्। विनयेन पिता

प्रोक्तः, कुमारेणेति सादरं ॥ ३ ॥ नश्यन्तं तात ! चौरेभ्यो, मुञ्च मां त्राणवर्जितम् । श्रुतं यदि मुनेर्वाक्यं, तथा परिणतं हृदि ॥४॥ युष्माभिरप्यनुज्ञातश्चारित्रनृपतेः पुरम् । गत्वाऽहमपि प्राप्नोमि, निर्वृतिं चौरदूरगाम् ॥ ५ ॥ ततो विजयसेननृपः अहो जिता ! कुमारेण वयमिति विचिन्त्याभिहितवान्-यथा वत्स ! यदस्माकं कर्त्तव्यं तत्किमिति भवानेव प्रथममेवाध्यवस्यति ?, न हि श्रेयःप्रयोजनमप्यनौचित्येन क्रियमाणं शोभां बिभर्त्ति, ततः पुरन्दरकुमारेणोक्तं-यथाऽऽदिशति तातस्तथैव, केवलं पित्रा श्रेयःप्रयोजने पूर्वमकृते पुत्रेण प्रथमं तत्र कर्त्तव्यमित्येष नियमो न क्वाचित् समाकर्ण्यते. न हि सर्वतो लग्ने प्रदीपनके नश्यतां प्रथमपश्चाद्भावगणना क्वाप्युपयुज्यते, तस्माद्विधाय प्रसादं विसर्जयतु मां तात !, तदेवं कुमारस्य प्रतिबन्धं विज्ञाय सहसोत्थाय च तं बाहौ गृहीत्वाऽभिहितं राज्ञा-वत्स ! यद्यप्येवं तथाऽन्यस्मिन् समये त्वदध्यवसितमर्थं तावदहमेव कर्त्तुमिच्छामि, न च भवन्तं विहायापरोऽपि कश्चिन्मदीयराज्यभरक्षमः समस्ति, नाप्यस्मदीयपूर्वजैः सर्वदैव परिपालिता निर्नाथा एव प्रजाः परित्यक्तुं शक्नोमि, दुष्प्रतिकारौ च मातापितरौ शास्त्रेषु श्रूयेते, ततो वयमेव दुष्टतस्करविडम्बनाभ्यस्तावन्मोचयितुं युक्ता भवत इत्यादियुक्तिभिरभिहितेन शिरोबद्धाञ्जलिना सविनयमभिहितं कुमारेण-यदादिशति तातस्तदेव मम प्रमाणं, यदेदं मम मुनीन्द्रवचनं चेतसि वत्स्यति तदा समयान्तरेऽप्यहमेतत् करिष्यामि, साम्प्रतं तु तात एव करोतु स्वसमीहितं, तदित्थं कुमारेण प्रतिपन्ने हर्षोदंचितवपुषा क्षितीशेन समाज्ञाता मन्त्रिसामन्ताः प्रवर्त्तितो महता विस्तरेण पुरन्दरकुमारस्य राज्याभिषेकः, स्वयं पुनः कमलमालादिभिर्विंशदमत्यादिभिर्मन्त्रिभिः समरकेत्वादिभिः सामन्तैरन्यैश्च बहुभिर्बन्धुपौरादिभिः सह विमलबोधकेवलिसमीपे विजयसेननरपतिर्विधिवद्दीक्षां प्रपन्नः, अत्रान्तरे विजयसेनराजान्तःपुरिका मालतीदेवी विचिन्तयति, यथा पुण्यभागयं मदीयभर्त्ता सुगृहीतनामधेयाश्च कमलमालाप्रमुखा

मदीयसपत्न्यः अपरेऽपिच सामन्तादयो यैरेतैः सर्वैरपि निष्कलङ्कं निजजन्मातिवाह्य पर्यन्तेऽस्य मुनीन्द्रस्य समीपे दीक्षा प्रतिपन्ना, मम पुनर्मन्दभाग्यायाः पुरन्दरकुमाराभिलाषप्रार्थनतद्देशान्तरगमननिमित्तीभवनादिकलङ्काङ्कितशरीरायाः व्रतग्रहणेऽपि न किञ्चित्फलं, गृहवासस्त्विदानीं भर्त्रा सपत्नीभिश्च व्रते गृहीतेऽतिनिन्द्य एव, तदिदानीं ममाधमचेष्टितायाः का गतिर्भविष्यतीति न वेद्मीति चिन्ताभरव्याकुलितानिर्वृत्तिः शोकसागरनिमग्नाऽधोमुखी मुहुर्मुहुरपरापरविकल्पमहलाश्रुप्रवाहमभिमुञ्चन्ती यावत्तिष्ठति तावत्केवलिना तदीयाकूतमभिज्ञायामन्त्र्य च प्रोक्ताऽसौ-देवानुप्रिये ! मैवमधृतिं कार्षीः मुञ्च विषादं कुरु त्वमपि यत् त्वदीयभर्त्रादिभिः कृतं, न चैवमाशंकनीयं यन्मम व्रतग्रहणेऽपि न किञ्चित्फलं, यतो नायं भवत्या दोषः, किन्तु तस्या एव पूर्वोपवर्णितभोगतृष्णायाः, सति वा दोषे इहपरभवोपकल्पितदुष्कृतवनगहनदहनमूर्त्तिरिति परमेश्वरैः प्रणीता दीक्षाऽसुमतां मुमुक्षूणां, तस्मान्निर्विकल्पं प्रतिपद्यस्व समस्तदुष्कृतमलक्षालनक्षमं स्वभर्त्रादिसमाचीर्णमार्गं, अत्रान्तरे एकेन साधुना पृष्टं-भगवन् किमनया विकल्पितं ?, किञ्च भवद्भिरादिष्टमित्येतद् यद्यस्माकं कथनयोग्यं तदा प्रसादं विधाय कथयंतु भगवन्तः, ततो मालतीराज्या प्रणम्य प्रोक्तं-यदीत्थमपि भगवन्तः कस्यचित्कश्चिद् गुणं पश्यन्ति तदा कथयंतु निर्विशङ्कं मदीयं दुष्टचरितं, ततः कथितं तत् सर्वमपि पर्षदः केवलिना, तच्छ्रवणतश्च पुनरपि संवेगमापन्नैर्बहुभिः प्राणिभिः सह मालतीराज्ञ्यपि मुनीन्द्रसन्निधौ विधिवत् प्रव्रज्यां जग्राह, ततो मुनीन्द्रवचनवासितान्तःकरणः सम्यक्त्वमूलं गृहिधर्म्मं प्रतिपद्य सपरिकरः केवलिनं प्रणम्य च निजनगरीं प्रविष्टः पुरन्दरराजः, मुनीन्द्रोऽपि विजयसेनराजर्षिप्रभृतिपरिकरकलितोऽन्यत्र विजहार ॥ अह पालइ सो रज्जं सूरोव्व पुरंदरो गुरुपयावो । कयमहिहरासिरिपाओ वियासओ सयलकमलाणं ॥ १ ॥ जायम्मि तम्मि पुहईवइम्मि नीसेसमंडलपयाहिं । रविकर-

फंसम्मिव कमलिणीहि पत्तं सुहं परमं ॥ २ ॥ पिउणोवि जन्न सिद्धं सिद्धं जं नविय पुव्वपुरिसाणं। लीलाए तंपि पुरंदरेण परिसाहियं सव्वं ॥ ३ ॥ विज्जादिन्नसुवन्नाइपूरिओ तस्स वुड्डिओ कोसो। कुड्डिं गओ पयावो न याणिमो केहिं हेऊहिं ॥ ४ ॥ अप्पुव्वचेइयाइं जिण्णुद्धारे रहाइजत्ताओ। तह तेण विणिम्मविया जह विम्हइओ सुरिंदोवि ॥५॥ अह बंधुमईए समं जा चिट्ठइ सो नरिंदसिरिनिलओ। ओलोयणोवविट्ठो पिक्खंतो नयरिववहारं ॥ ६ ॥ तो धूलिधूसरतणू कयदंडीखंडनिवसणो दीणो। बहुडिंभखित्तकयवररयलिद्दुट्ठसएहि हम्मंतो ॥ ७ ॥ कयलोयकलकलरवो कुद्धो धावंतओ चउदिसासु। दिट्ठो सो चिरविप्पो विज्जा उद्धंसिया जेण ॥ ८ ॥ तो खणमेगं निज्झाइऊण उवलक्खिओ नरिंदेण। परिचिंतियं च हियए पिच्छ अहो भवसरूवत्तं ॥ ९ ॥ तह एस पुरा होउं दक्खो वत्ता सुरूवसंपन्नो। विबुहजणसोयणिज्जं कह पत्तो एरिसमवत्थं ? ॥ १० ॥ इच्चाइ चिंतिऊणं आणावेउं च नियगिहे विप्पं। कयपणिहाणो विहिणा तं विज्जं सुमरए राया ॥ ११ ॥ सुमरियमित्ता य तओ भणइ पुरो दंसिऊण अप्पाणं। नरनाह! कहसु कज्जं जेण अहं सुमरिया तुमए ॥१२॥ तो भणइ नराहिवई पत्तो किं देवि! एरिसमवत्थं। एस महप्पा विप्पो ? विज्जादेवी तओ भणइ ॥ १३ ॥ जंमाहप्पा एयस्सऽवत्था जाणामि तं अहं चेव। किन्तु तुह विणयसमुवज्जियाए निहओ मए न इमो ॥१४॥ जं सरलत्तेण तए तइया एसोऽवि गाहिओ विज्जं। एयस्स उवहासाइ चिट्ठियं तुज्झवि समक्खं ॥ १५ ॥ विज्जासाहणहेउं तुमए परिपोसिएण य इमेण। हीलानिंदाइ कयं जं तं कहिउंपि नो जुत्तं ॥१६॥ तो कुद्धाएवि मए तुह लज्जाए न मारिओ एसो। सिक्खामित्तं च कयं तुमंपि जेणेरिसं मुणसि ॥ १७ ॥ जं एरिसा न जोग्गा एरिसयाणं महारहस्साणं। जुत्ताजुत्तवियारो पजुज्जए सयलकज्जेसु ॥ १८ ॥ नहि मुत्ताहलहारो रेहइऽरिट्ठस्स संठिओ कंठे। न य नेउरं विरायइ परिट्ठियं उंटचरणम्मि ॥१९॥

तम्हा दूरे चिट्ठंतु मंतविज्जारहस्सकहणाइं । आलविउंपिहु विबुहाण एरिसा नरवर ! न जुत्ता ॥२०॥ तो भणइ नरवरिंदो देवि ! इमो जइवि एरिसो तहवि । काऊण मह पसायं खमियव्वो एस अवराहो॥२१॥ अंतरियंपिव नियगरुयथाए न बुहा नियंति परदोसं। जलहीवि निद्दहंतंपि वाडवं वहइ उयरेण ॥ २२ ॥ तम्हा देवि ! पसायं काउं सज्जं करेसु विप्पमिणं । इच्चाइविणयसमलंकिएहिं भणिएहिं नरवइणो ॥ २३ ॥ देवी सज्जं काऊण तं दियं सयमदंसणं पत्ता । नरवइणावि जहारिहइड्ढिईए सम्माणिओ विप्पो ॥२४॥ एत्तो य पालिऊणं वयमकलंकं बहूइं दियहाइं । सिरिविजयसेणसाहू धुयकम्मंसो गओ मोक्खं ॥ २५ ॥ राया पुरंदरोविहु रज्जसुहं किंपि कालमणुहविउं । बंधुमईए पुत्तं सिरिगुत्तं ठाविउं रज्जे ॥ २६ ॥ सिरिविमलबोहकेवलिपयमूले तदुवइट्ठविहिपरमं । बंधुमइ-मुहपरियणपरिकलिओ कुणइ पव्वज्जं ॥ २७ ॥ कालेण य गीयत्थो जाओ पढिऊण बहुविहं सुत्तं । संसारभउव्विग्गो विणएण तओ गुरु भणइ ॥ २८ ॥ जइ अणुमन्नह भयवं ! एकल्लविहारपडिमपडिपन्नो । विहरामि अहं तो महियलम्मि तुह पयपसाएण ॥ २९ ॥ केवलिणाविहु आराहउत्ति नाऊण सो अणुन्नाओ । सीहोव्व असंभंतो विहरइ गामाणुगामम्मि ॥३०॥ अह स महप्पा कहमवि कमेण कुरुजणवयम्मि संपत्तो । तत्थ य कस्सइ गामस्स गोयरो पायभूमीए ॥३१॥ अइदारुणम्मि गिम्हे नहमज्झमुवागयम्मि सूरम्मि । खाणुव्व उद्धदेहो आयावंतो निरावरणो ॥ ३२ ॥ जलणुण्हभाणुकरतवियदेहपगलंतसेयसलिलोहो । वियलंत सुरसरिजलो थिरसव्वंगो हिमगिरिव्व ॥ ३३ ॥ विणिविट्ठरुक्खपोग्गलदिट्ठी परिमुक्कदेहपडिबंधो । झायंतो चिट्ठइ जाव सुहुमं परमक्खरं किंपि ॥ ३४ ॥ ताव तहिं जो पुव्विं विणिज्जिओ सो समागओ कहवि । वज्जभुओ पल्लिवई पिच्छइ तं मुणिवरं पावो ॥ ३५ ॥ तो पज्जलंतकोवो सो संमुहमेइ मुणीसरं भणइ । मज्झ मलिऊण माणं तइया तह रे महादुट्ठ! ॥३६॥ कह तं छुट्टसि

जइ चडसि नहयलं अहव विससि पायालं। हणिऊण तुमं इण्हिं नियवेरं तहवि साहेमि ॥ ३७ ॥ इच्चाइबहुविहेहिं तस्सासंबद्ध-वयणनिवहेहिं। खरपवणेहिं गिरिंदोव्व मुणिवरो जाव नहु चलइ ॥ ३८ ॥ ता कुविओ पलिलवई चउदिसिं तस्स मुणिवरिंदस्स। पक्खिवइ रालगुग्गुलसणतणवत्थाइवत्थूणि ॥ ३९ ॥ तो पसरियधूमसिहं फुरंतजालालिजलियनहविवरं। पज्जालेइ हुयासं कय-जणपलयानलासंकं ॥४०॥ तो जह २ जलियहुयासणेण डज्झंतमुणिसरीरस्स। संकुडइ नसाजालं तह तह वड्ढेइ सुहभावो ॥४१॥ तथा हि चिंतयत्यसौ यथा-मा तम्मसु जीव! तुमं उवट्ठिए दारुणंमि उवसग्गे। जं विरइयं सयंचिय फलमेयं तस्स कम्मस्स ॥४२॥ एत्तो अणंतगुणदाहदायगो निरयहुयवहो सत्थे। सुव्वइ अणंतवारं सहिओ एक्किक्कजीवेण ॥ ४३ ॥ तिरियत्तणेवि पुव्वं अणंतसो वणदवम्मि तं जीव!। दड्ढो परं अकामत्तणेण न गुणो तए पत्तो ॥ ४४ ॥ इण्हिं नियमणकारणविवेयविप्फुरियकामभावस्स। तत्तो अणंतगुणिया थेवेणवि निज्जरा तुज्झ ॥४५॥ जो य कुणइ उवसग्गं सत्तू न इमोऽवि किन्तु कम्माणं। निज्जरसाहिज्जपवत्त-णेण तुह बंधवो परमो ॥ ४६ ॥ धुवनेइयव्वकम्मे जिणवयणरसम्मि परिणए सम्मं। अधुवे अवस्सदेहे लाभोच्चिय दुक्खपरिसहणं ॥ ४७ ॥ अन्नाणिणो य पिच्छह सयमेव विसंति हुयवहाईसु। विहिणा पत्तं तु दुहं किमजुत्तं तुह सहंतस्स ? ॥ ४८ ॥ नेरइयाणं अयरोवमाइं सहिऊण केवलं दुक्खं। पुरओवि संसओच्चिय सोक्खे अज्जवि सुकम्माणं ॥ ४९ ॥ तुह खणमित्तं तु दुहं पुरओ पुण निच्छियं सुहं चेव। दिप्पंतसुहज्झवसाणक्खवियकम्मिंधणहरस्स ॥ ५० ॥ साधु धर एसु धीरिम सहसु दुहमिणं कुणसु केवलं मित्तिं। एयम्मि पलिलनाहम्मि लहसि जेणिच्छियं लच्छिं ॥ ५१ ॥ इय सुहभावणजालावलीहिं अंतो पलीविए कम्मे। बाहिं पुण पलिलवईसिहिणा निज्झामिए देहे ॥ ५२ ॥ स पुरंदररायरिसी होउं अंतगडकेवली भयवं। सिवमयलमरुयमक्खयमव्वाबाहं

पयं पत्तो ॥ ५३ ॥ पल्लिवईविहु अइगरुयपावकारित्ति तक्खणं चेव । नियपरियणेण पढमं विरत्तचित्तेण परिचत्तो ॥ ५४ ॥ तो रायाइभएणं पलायमाणो कहिंपि एगागी । रयणीऍ अपिच्छंतो पडिओ सो अंधकूवम्मि ॥ ५५ ॥ तत्थावि य पुव्वनिवाडियखाइरखीलेण कलचहुट्टेण । विद्धो उरम्मि तत्तो वेयणनिवहं अणुहवंतो ॥ ५६ ॥ अइविरसं कंदंतो अंतोसल्लेण सल्लिओ पावो । डज्झंतोवि गयंतो गयसवणो सव्वहा दुहिओ ॥ ५७ ॥ रुद्दज्झाणोवगओ मरिऊणं सत्तमाए पुढवीए । उक्कोसाऊ जाओ अपयट्ठाणम्मि नेरइओ ॥ ५८ ॥ जत्थ य पुरंदरमुणी सिद्धो देवेहिं तत्थ हिट्ठेहिं । गंधोदगवासाईहिं विरइओ निब्भरं महिमा ॥५९॥ उग्गं काऊण तवं उप्पाडेऊण केवलं नाणं । बंधुमईविय सिद्धा निद्धियनीसेसकम्मंसा ॥ ६० ॥ इति पुरन्दरकुमारचरितं समाप्तम् ॥

तदेवं यथा योग्यस्य पुरन्दरकुमारस्य प्रदत्ता विद्या सफलतां गता, अयोग्यस्य तु विप्रस्यानर्थफला सञ्जाता, एवं सूत्रार्थावपीति परिभाव्य योग्यस्यैव तौ देयौ, नायोग्यस्य, बहुतमदोषसम्भवादिति स्थितम् ॥ अमुमेवार्थं दृष्टान्तेन दृढयन्नाह—

आमे घडे निहत्तं जहा जलं तं घडं विणासेइ । इय सिद्धंतरहस्सं अप्पाधारं विणासेइ ॥ २७ ॥

यथा आमे-अपरिपक्वे घटे प्रक्षिप्तं जलं तमेव घटं विनाशयति, भूमिगमनादिभ्यः, स्वयमपि तोयं विनश्यतीत्यपि द्रष्टव्यम् । इति-एवं सिद्धान्तरहस्यं-आगमतत्त्वमप्यल्पाधारं-तुच्छप्राणिलक्षणं दीर्घरोगोन्मादप्रदानादिभ्यो विनाशयति, स्वयमपि तत् सिद्धान्तरहस्यमुपहासप्राप्त्यादिभ्यो विनश्यति इत्यत्रापि स्वयमुत्प्रेक्षणीयं इति गाथार्थः ॥ योग्येनापि विशेषेण ज्ञानं जिघृक्षता नेदं चिन्तनीयं यदुत मम तथाविधा मेधा नास्ति अतो नेदं मया ग्रहीतव्यं, किमिति नैवं विचिन्त्यमित्याह—

मेहा होज्ज न होज्ज व लोए जीवाण कम्मवसगाणं । उज्जोओ पुण तहविहु नाणंमि सया न मोत्तव्वो ॥ २८ ॥

अस्मिन् लोके कर्म्मवशगानां जीवानां मेधा कर्म्मायत्तैव, ततश्च सा मेधा कर्म्मक्षयोपशमसद्भावात् कस्यचिद् भवेत्, कस्यचित्तदभावात् न भवेत्, किं तत्र जीवाः कुर्वन्ति ?, परायत्तत्वादिति भावः, उद्योगः पुनः-उद्यमस्तथापि ज्ञाने पठितव्ये सदा-निरन्तरं न मोक्तव्यः, इदमुक्तं भवति-परस्योत्कर्षवर्त्तीं प्रज्ञामवलोक्य मम न किञ्चिदागच्छतीत्युद्विग्नतः सर्वथैवाध्ययनप्रयत्नो न मोक्तव्यः, कर्म्मनिर्जरैव हि साध्या, सा च प्रज्ञावत इतरस्य च श्रुताध्ययनं कुर्वतः सम्पद्यत एव, किं तत्रोद्वेगादिकरणेनेति भाव इति गाथार्थः ॥ ननु यदि दिनं प्रति श्लोकदशकादिकं किंचित्पठतामागच्छेत् तदा युज्येतापि तदुद्यमो, यदा तु समस्तेनापि दिनादिना पदादिमात्रमेव किञ्चिदागच्छति तदा किं तेनेत्याशङ्क्याह—

जइवि हु दिवसेण पयं धरेइ पक्खेण वा सिलोगद्धं । उज्जोयं मा मुंचसु जइ इच्छसि सिक्खिउं नाणं ॥२९॥

यद्यपि दिवसेन समस्तेनापि पदं धरति- अवतिष्ठते पक्षेण वा श्लोकार्द्धमवतिष्ठते तथाऽप्युद्योगं मा मुंच यदीच्छसि शिक्षितुं ज्ञानं, इदमुक्तं भवति-यद्यपि दिवसादिना पदादिमात्रमेवागच्छति तथापि बहुना कालेन तद् बहु सम्पद्यते, यदि तु उद्वेगं कृत्वा सर्वथैवाध्ययनं मुंचति तदा प्रभूतेनापि कालेन कञ्चिद् गुणं न साधयति, तस्माद्यथा तथा श्रुतपठनाभ्यासः सर्वथैव न मोक्तव्यः, उक्तंच-"अज्ञनस्य क्षयं दृष्ट्वा, वल्मीकस्य च वर्द्धनम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्म्मसु ॥१॥ यो यमर्थं प्रार्थयते, तदर्थं घटते च यः । सोऽवश्यं तमवाप्नोति, श्रान्तश्चेन्न निवर्त्तते ॥ २ ॥ योजनानां सहस्रं तु, शनैर्याति पिपीलिका । अगच्छन् वैनतेयोऽपि, पदमेकं न गच्छति ॥ ३ ॥ इतिगाथार्थः ॥ अत्रार्थे सूत्रकारः स्वयमेव दृष्टान्तमाह—

जं पिच्छह अच्छेरं तह सीयलमउयएणवि कमेण । उदएण गिरी भिन्नो थोवं थोवं वहंतेण ॥ ३० ॥

यद् यस्मात् पश्यताश्चर्यं यदुत तथा-तेन लोकप्रसिद्धेन प्रकारेण शीतलमृदुनापि-स्तोकस्तोकं वहतापीत्यत्रादिशब्दः सम्बध्यते, नद्यादिसम्बन्धिना उदकेन गिरिभिन्नः, सकलजनप्रसिद्धं चैतत्, एवमत्रापि स्तोकस्तोकं पठन्तोऽपि कालेन श्रुतरहस्यगिरिभेदिनो भवन्तीत्युपनय इति गाथार्थः ॥ उक्तं च ग्रहणविधिद्वारं, साम्प्रतं गुणाश्च के तस्येति चतुर्थं द्वारमभिधित्सुराह—

सूई जहा ससुत्ता न नस्सई कयवरंमि पडियावि। तह जीवोऽवि ससुत्तो न नस्सइ गओऽवि संसारे ॥३१॥

यथा सूचिः ससूत्रा-छिद्रप्रोतसूत्रनिर्म्मितदवरका कचवरे पतितापि न नश्यति, दवरकदर्शनानुसारेण पुनरपि गृह्यत इति भावः, तथा जीवोऽपि ससूत्रः-पठितसिद्धान्तोऽशुभकर्म्मोदयवशात् प्रतिपातितः सन् संसारं गतोऽपि न नश्यति, तस्यैव पूर्वाधीतश्रुतस्य माहात्म्यात् पुनरप्याक्षिप्तबोधिलाभादिभावः केवलमुत्पाद्य स्तोककालेनैव सिद्ध्यत्येवासाविति भाव इतिगाथार्थः ॥ असूत्रा पुनः सूचिर्यथा रेणुमध्ये पतिता नश्यति एवं जीवोऽपि भवरजसीति व्यतिरेकमाह—

सूईवि जह असुत्ता नासइ रेणुम्मि निवडिया लोए। तह जीवोऽवि असुत्तो नासइ पडिओ भवरयम्मि ॥ ३२ ॥

गतार्था। तदनेन ज्ञानस्य बोधिलाभाक्षेपकत्वादिगुण उक्तः, इदानीं तु तस्यैव चारित्रशोधकत्वगुणमाह—

जह आगमपरिहीणो विज्जो वाहिस्स न मुणइ तिगिच्छं। तह आगमपरिहीणो चरित्तसोहिं न याणेइ ॥३३॥

यथा आगमेन-आत्रेयादिऋषिप्रणीतशास्त्ररूपेण परिहीणो-रहितो वैद्यो व्याधेः चिकित्सां-अपगमोपायरूपां न मुणति, तथा आगमेन-कल्पव्यवहारादिलक्षणेन परिहीणः साधुरपि चारित्रस्यातिचारमलक्लिन्नस्य शुद्धिं-प्रायश्चित्तदानेन निर्मलीकरणलक्षणां न जानाति, हीनाधिकादिदोषदुष्टं प्रायश्चित्तं दत्त्वाऽऽत्मानमालोचकं च संसारभाजनं करोतीति भाव इति गाथार्थः ॥

किञ्च-ज्ञानादपि प्रधानं वस्त्वेव किमपि नास्तीति दर्शयति—

**किं एत्तो लट्ठतरं अच्छेरतरं व सुंदरतरं वा ?। चंदमिव सव्वलोगा बहुस्सुयमुहं पलोयन्ति ॥ ३४ ॥**

किमेतस्मात्-ज्ञानाल्लष्टतरं?, न किञ्चिदित्यर्थः, आश्चर्यं-चित्तविस्मयरूपं, प्रकृष्टमाश्चर्यं आश्चर्यतरं, तज्जनकत्वाद्वस्त्वप्युपचारादाश्चर्यतरं, तदपि ज्ञानादपरं किं ?, न किमपीति भावः । चतुर्दशपूर्वविदादीनां अनुत्तरसुरशरीरपुद्गलेभ्योऽप्युत्कृष्टतरपुद्गलप्रकल्पितजलज्वलनशैलाद्यस्खलितहस्तप्रमाणाहारकशरीरकरणादिसामर्थ्यहेतुत्वात् ज्ञानमेव सर्वाश्चर्यनिधानं, नापरमिति हृदयं, सुष्ठु दर्प्पयति-हर्षं नयति दृष्टं सत् तत् समस्तलोकानिति निरुक्तविधिना सुन्दरं, प्रकृष्टं सुन्दरं सुन्दरतरं, लष्टतरं सामान्येनैव शोभनतरं विवक्षितं, सुन्दरतरं तु यथोक्तस्वरूपमिति ततोऽस्य भेदः, ततः सुन्दरतरमपि न ज्ञानादपरमस्ति, कथमिदं ज्ञायत इत्याह-यतो ज्योत्स्नापीयूषप्रवाहप्लावितपृथ्वीतलं पर्वचन्द्रमिव बहुश्रुतमुखं सर्वलोकाः अन्तःप्रसर्प्पत्प्रचुरबहुमानाहर्षभरनिभृतचेतसः सर्वतः पुष्पद्बहलपुलकाः सानन्दविस्फारितदृशः प्रलोकयन्ति, ततो लोकमध्ये पुरुषत्वादिधर्म्मेषु सामान्येष्वपि शेषपदार्थेभ्यः स्वाधारे प्रकर्षवद्गौरवाधानकारणत्वात् ज्ञानमेव लष्टतरादिस्वरूपं, नान्यदिति स्थितम् । अथवेत्थं व्याख्यायतः-चन्द्रमिव सर्वलोका बहुश्रुतमुखं प्रलोकयन्ति, किमध्यवस्यन्त इत्याह-किमेतस्माद् बहुश्रुतमुखादपरं लष्टतरमाश्चर्यतरं वा सुन्दरतरं वेत्येवं योजनां कृत्वा भावना पूर्वोक्तानुसारेण कार्येति गाथार्थः ॥ किञ्च प्रकर्षवत्याः कर्म्मनिर्जराया अपि ज्ञानमेव कारणं, नान्यदिति दर्शयन्नाह—

**छट्ठट्ठमदसमदुवालसेहिं अबहुस्सुयस्स जा सोही । एत्तो उ अणेगगुणा सोही जिमियस्स नाणिस्स ॥ ३५ ॥**

अट्ठाणे अ पसंससि अप्पाणं गरुयअंतरे भुल्लो । न हि अंबयाण सद्धा नियत्तए अंबिलीयाहिं ॥ ४४ ॥ ईसिवियसंतमालइकालियामयरंदयाण परितुट्ठो । कत्थ विधरिज्जइ सोऽवि महुयरो कयरकुसुमेहिं ? ॥४५॥ लीलाकरेणुकरगहियसरससल्लइदलग्गदुल्ललिओ । कह हीरइ करिकलहो अइनीरसफरुसघासेहिं ॥ ४६ ॥ जइ य तुमं चिय देवो देवगुणा तुज्झ जइ य सव्वेऽवि । ता कारेसि पणामं बलिमंडाए मए कीस ? ॥४७॥ न हि अप्पणोऽवि गुरुया गुणे पयासंति अप्पणा चेव । एमेव पत्तभूयं सरियाओ सरंति सरिनाहं ॥ ४८ ॥ का गुणगुरूण हाणी बहु मन्निज्जंति जइ न इयरेहिं? । किं झिज्जइ रविणो जइ न बहु मओ सो उलूयस्स ? ॥ ४९ ॥ इय तेण कओ जक्खो निरुत्तरो गरुयनिउणवयणेहिं । तो परिकुविओ एसो विउव्वए कुमरदेहम्मि ॥ ५० ॥ सीसच्छिकन्नउरदंतनिस्सिया वेयणाओ तिव्वाओ । जा एक्काऽवि हु जीयं हरेइ नियमेण इयरस्स ॥ ५१ ॥ तद्दुक्खसल्लियतणू संजाओ सव्वहा विगयचेट्ठो । गुरुसत्तसारघडिओ तहवि इमं चिंतए कुमरो ॥ ५२ ॥ रे जीव ! तए पत्तो निव्वुइपुरपत्थिएण सत्थाहो । देवो सिरिसव्वन्नू अपत्तपुव्वो भवारण्णे ॥ ५३ ॥ ता इमिणच्चिय चित्तट्ठिएण मरणंपि तुज्झ कल्लाणं । एयंपि पुणो मुक्के होसि अणाहो जियंतोऽवि ॥ ५४ ॥ कित्तियमित्तं च इमं दुक्खं तुह जिणमए अ पत्तम्मि? । पावियअणंतपोग्गलपरियट्टदुहस्स नरएसु ? ॥ ५५ ॥ इय तस्स अवट्ठंभं अवहीए जाणिऊण सो जक्खो । अहियं कुविओ गयणे सिलं महंतं विउव्वेइ ॥५६॥ भणई य कुमर ! इण्हिं सपरियणो भो तुमं विणस्सिहिसि । अज्जवि पणाममेत्तेण देमि जीयं च रिद्धिं च ॥ ५७ ॥ तो वीसत्थं कुमरो पभणइ मह भंगुरं बहिं देहं । जइवि विणासयसि तुमं मिच्छाभिणिवेसिओ कहवि ॥ ५८ ॥ तहविहु जिणचलणुप्पललीणस्स महंतरंगदेहस्स । न तए न य सक्केणं अण्णेण व कीरए नासो ॥ ५९ ॥ तम्मि य अविणट्ठे मज्झ किंपि न विणस्सए तुमं तम्हा । जं

रुच्चइ कुणसु तयं को तुज्झ निवारओ एत्थ ? ॥ ६० ॥ इय नाऊण कुमरस्स साहसं निच्चलं च सम्मत्तं । विम्हइयमणो चिंतइ जक्खो विहडंतमिच्छत्तो ॥ ६१ ॥ पेच्छह कह सत्तमिमस्स ? कह व धम्मम्मि निच्चला बुद्धी? । मह पुण अणज्जकज्जाणुवत्तणं पिच्छह अउव्वं ॥ ६२ ॥ जीवदयालुत्ति इमो सरीरकज्जेऽवि न हणए जीवे । मह पुण कज्जाभावेऽवि ताण हणणम्मि असग्गाहो ॥ ६३ ॥ तो दूरेच्चिय चिट्ठइ से देवो जो इमस्स थोयव्वो । एएणऽवि विजिओऽहं गुणेहिं संतिक्कसारेहिं ॥६४॥ तो जुत्तं चिय एयं जं केवलगुणविनिम्मिओ एसो । न कुणइ मज्झ पणामं गुणलेसेणावि मुक्कस्स॥ ६५ ॥ इय निम्मलकुमरगुणेहिं रंजिओ संभमेण सो जक्खो । संहरिऊणुवसग्गे नमिउं च कमेसु तस्सेव ॥ ६६ ॥ पभणइ धन्नोऽसि तुमं जयम्मि सलहिज्जसे तुमं चेव । इय वीयरायचलणेसु जस्स तुह निच्चला भत्ती ॥ ६७ ॥ अज्जप्पभिई मज्झऽवि सोच्चिय देवो गुरूवि सो चेव । तत्तंपि तं पमाणं जं धीर ! तएच्चिय पवन्नं ॥ ६८ ॥ एत्तो य अहं निद्देसकारओ तुज्झ चेव गुणनिहिणो । धम्मगुरू मज्झ तुमं जाओऽसि तुमं परमबंधू ॥ ६९ ॥ एवं थुव्वंतोऽवि हु मज्झत्थो चेव चिट्ठिओ कुमरो । तो नमिउं भणइ सुरो जइऽवि निरीहो महाभाग ! ॥७०॥ तहवि हु विसमदसाए सुमरिज्ज ममं अणुग्गहं काउं । होइ निरीहाणवि उत्तमाण पणएसु कारुण्णं ॥ ७१ ॥ अह भणियं कुमरेणं भद्द ! तए उज्जमं कुणंतेण । जिणधम्मे अम्हाणं सव्वंपि कयं किमन्नेण ? ॥ ७२ ॥ तो कुमरगुणावज्जियहियओ तं खामिउं बहुं जक्खो । सट्ठाणमणुप्पत्तो गओ कुमारोऽवि नियगेहं ॥ ७३ ॥ अह अन्नया नरिंदे जाए जससेसयम्मि संठविओ । निवविक्कमो कुमारो रज्जम्मि महासमिद्धम्मि ॥ ७४ ॥ जाओ सामी महिकामिणीए सो चउसमुद्दरसणाए । पसरियपरमपयावो पयट्टियासेसनयमग्गो ॥ ७५ ॥ रम्मेहिं जिणहरेहिं विहूसियं तेण सयलमहिवलयं । पाएण सव्वलोगो विहिओ जिणसाहुपयभत्तो ॥ ७६ ॥

एत्तो य अत्थि राया कलिंगविसयाहिवो जवो (मो) नाम । देवयवरलंभवसा न हारए सो अ समरम्मि ॥ ७७ ॥ तो लूडंतो विसए पत्तो निवविक्कमस्स सीमाए । आगंतूण य समुहं रुद्धो सो माणिणा तेण॥७८॥ ढुक्को य तस्स पढमे दिणम्मि निवविक्कमस्स सेणाणी । भग्गो बीयदिणाइसु निहया अन्नेऽवि सेणाणी ॥ ७९ ॥ तो आढत्तो निवविक्कमोऽवि नाऊण तस्स वरलद्धिं । काउं तिण्णुववासे सुमरेइ धणंजयं जक्खं ॥ ८० ॥ पत्तो य तक्खणेणं सो तत्थ निवेइयं च तं सव्वं । भणियं च तेण नरवर ! केत्तियमेत्तं च किर एयं? ॥८१॥ तम्हा पभायसमए ढुक्कसु तं चेव समररंगम्मि । अजिइंदियं व मयणस्स नेमि तुह जेण वसमेयं ॥ ८२ ॥ अह खोभंतो नियबलभरेण भुवणंपि तस्स वयणेण । ढुक्को रणम्मि सूरो राया निवविक्कमो तस्स ॥ ८३ ॥ तस्स य सेन्ने अमरेण तह कयं जह न कस्सऽवि सरीरे । पहवइ परबलमुक्कं तोमरकुंताइयं सत्थं ॥ ८४ ॥ निवविक्कमबलमुक्कं तु इयरसेन्नम्मि करिवराईणं । तणलेट्ठुमाइयंपि हु परिणमइ सुरिंदसत्थं व ॥ ८५ ॥ इय जुज्झंताण खणेण चेव जाओ जमो विरलसेन्नो । तो बंधिऊण निवविक्कमेण गहिओ हढेणेसो ॥ ८६ ॥ दीणेहि य वयणेहिं पभणइ देवेण मह वरो दिन्नो । तस्स बलेणं एयं पावेण मए कयं सव्वं ॥ ८७ ॥ नवरं तस्सऽवि एयं पज्जवसाणं वरस्स ता इण्हिं । मुंच पसायं काउं न पुणो एवं करिस्सामि ॥ ८८ ॥ निवविक्कमेण भणियं मणिमंतोसहि सुरावि ता चेव । हुंती सफला न मुच्चइ पुरिसो जा निययपुन्नेहिं ॥ ८९ ॥ नासंति चक्किणोऽविहु तव्विगमे सोलसामरसहस्सा । रयणनिवहोऽवि जायइ विहलो को एत्थ पडिबंधो ? ॥ ९० ॥ किंतु न पहरेमि अहं सत्तुसुवि दीणयं पवन्नेसु । इय मुक्कोऽसि करिज्जसु पुणोऽवि जं सिक्खियं तुमए ॥९१॥ दाऊण कणयतुरयाइ किंपि सम्माणिऊण सो मुक्को । निवविक्कमोऽवि वलिउं पत्तो नियरायहाणीए ॥ ९२ ॥ पालइ य महिं सोक्खेण तम्मि निद्देसकारए

जक्खे । बहुसुरजुए कुणंते संनिज्झं विसमकज्जेसु ॥ ९३ ॥ बाहिं निग्गच्छंतो नयराओ अन्नया स नरनाहो । वरवारणखंधगओ नरवरभडकोडिपरियरिओ ॥ ९४ ॥ ऊसियतोरणमालं सित्तं घणघुसिणचंदणरसेणं । पेच्छइ गेहं इब्भस्स नयरसेट्ठिस्स धणयस्स ॥ ९५ ॥ पमुइयचित्तो पविसइ य तत्थ सिंगारिओ नयरलोगो । गहियक्खवत्तवरपोत्तकणयमणिनिम्मियाहरणो ॥ ९६ ॥ हरि-सुप्पीलपहोलिरथणवट्टखलंततुट्टहारलओ । रमणीयणोऽवि नच्चइ ऊसियभुयराणिरमाणिवलओ ॥ ९७ ॥ जियकलकंठिरवाओ गायंति मणोहरं अविहवाओ । पविसंति पाउलाइं कयसुहयरनट्टगेयाइं ॥ ९८ ॥ अंगणसंठवियसुवन्नपुन्नकलसेहिं रुद्धसंचारो । दारट्ठिओ पहिट्ठो सवणसुहं पढइ बंदियणो ॥ ९९ ॥ दिज्जंति महादाणाइं तत्थ खज्जंति विविहखज्जाइं । पिज्जंति पाणयाइं सम्माणिज्जंति विद्धजणा ॥१००॥ मणिकणयसिंगियाहिं छंटिज्जइ कुंकुमेण सयलजणो । कुसुमविलेवणतंबोलपउरवत्थाइं दिज्जंति ॥ १०१ ॥ तह तस्स घरे सव्वो हरिसपमत्तो जणो परिभमइ । अप्पाणयंपि न जहा सुमरइ जाओ अणप्पवसो ॥१०२॥ तह दट्ठूणं रन्ना पुट्ठं किं हरिसकारणं एत्थ ? । कहियं केणइ कल्लम्मि देव ! पुत्तो इहं जाओ ॥१०३॥ इय सोऊणं राया बाहिं काऊण आस-वाहाणियं । नयरुज्जाणसिरिं चिय जा दट्ठूणं पडिनियत्तो ॥ १०४ ॥ ता पिच्छइ तम्मि घरे सोच्चिय लोओ महंतसद्देण । रोयइ करुणसरेणं हा हा किमियंति जंपंतो ? ॥ १०५ ॥ वच्छत्थलाइं पिट्टइ विलवइ मुच्छइ पडेइ य धराए । ताडइ सीसे तोडेइ भूसणे फाडए पोत्ते ॥ १०६ ॥ इय गहगहीयदेहं व परवसं तं जणं मुणेऊण । विम्हियहियओ राया पुच्छइ, हा किमिह जायंति? ॥ १०७ ॥ अह केणइ विन्नत्तं देव ! अपुत्तस्स धणयसेट्ठिस्स । जो उप्पन्नो पुत्तो कहिंपि उवयाइयसएहिं ॥ १०८ ॥ सो केणइ रोगेणं उवसंहरिओ इहं खणद्धेण । तयणु घसक्कियहियओ अत्थमिओ धणयसेट्ठीवि ॥ १०९ ॥ इय असमंजसमायन्निऊण वेरग्ग-

मुवगओ राया। पभणइ हंदी भवविलसियाण पज्जंतविरसाणं ॥ ११० ॥ जेहिं चिय वयणेहिं गीयं तेहिंपि रुज्जए इण्हि। तो नूणमिंदयालंपि एरिसं न हवइ विचित्तं ॥ १११ ॥ तो विन्नत्तं सचिवेण देव! गम्मउ पुरो इहं जाव। नीहरइ उ सवजाणं कसायचीरीहिं चिंचइयं ॥ ११२ ॥ तत्तो विरत्तचित्तो भवस्स राया गओ सयं गेहं। दिवसं रत्तिं च गमेइ कहवि तं चेव चिंततो ॥ ११३ ॥ एत्थंतरम्मि सम्मत्तदायगो केवली विहरमाणो। पुणरवि पत्तो नाऊण निवइणो चरणसमयंति ॥ ११४ ॥ वद्धाविओ नरिंदो हिट्ठेणुज्जाणवालएण तओ। विउलं च पारिओसियदाणं वियरइ निवो तस्स ॥ ११५ ॥ वंदणहेउं मुणिणो य तस्स गरुयाए नियविभूईए। चंदोअयउज्जाणे गओ नरिंदो पमोएण ॥ ११६ ॥ काउं पयाहिणतियं विहीओ नामिऊण उचियदेसम्मि। उवविट्ठस्स सपरियणस्स तस्स नाणी कहइ धम्मं ॥ ११७ ॥ अह अवसरम्मि राया पुच्छइ भयवं! गिहम्मि धणयस्स। अइविम्हयसंजणयं कह तं असमंजसं जायं? ॥ ११८ ॥ तो भणियं केवलिणा वियंभियं अंतरंगलोयस्स। केत्तियमित्तं पुच्छसि अणंतचरियस्स? नरनाह! ॥ ११९ ॥ कः पुनरसौ भगवन्नन्तरंगलोकः?, केवलिना प्रोक्तम्—महाराज! श्रूयतामवहितैः,—

समस्तीह भवावर्त्तपुरे मोहराजो नाम राजेन्द्रः, ततो राज्ञा सकौतुकं किंचिदौत्सुक्यमवलम्ब्य प्रोक्तम्—भगवंस्ततः?, ततः केवलिनाऽभ्यधायि-महाराज! तस्य नरपतेरतीव वल्लभः सदा सन्निहितो गवलगरलव्यालजीमूतकान्तिः प्रकृतिसमुद्धतात्मा समुन्नतहृदयो विकटगतिर्मिथ्याभिमानो नाम सुभटः समस्ति, येनाक्रान्तमूर्त्तयः प्राणिनो विदधत्यवस्तुष्वपि वस्तुबुद्धिं विकल्पयन्ति क्षणभंगुराण्यपि स्थेयांसि पश्यन्त्यसारमप्यात्मानमिन्द्रचक्रवर्तिभ्योऽप्यधिकं नृत्यन्ति सोन्मादं गायन्ति सोत्कंठं न निरीक्षन्ते समदृष्ट्या निष्ठीवन्ति निजस्कन्धस्याप्युपरितनभागेन भ्रमन्ति विकटं गणयन्ति तृणवत्, परं सर्वथाविडम्बनाप्रायःशब्दाद्युपभोग-

प्रमत्ता न चेतयन्त्यात्मानं परित्यजन्ति धर्मकृत्यानि, ततः परलोकवार्त्तामप्यचिन्तयन्तः कुर्वन्ति तास्ताः संविग्नजनशोचनीयाः प्राकृतजनोपहासपदवीत्वमापन्नाः चेष्टाः, ततः प्रथमं स मिथ्याभिमानसुभटस्तेन राज्ञा धनदश्रेष्ठिगृहे पुत्रजन्मसमये प्रेषितः, ततो नगरान्निर्गच्छता महाराजेन यद्गीतनर्त्तनादि चेष्टितं तस्य श्रेष्ठिनो गृहे दृष्टं तत् सर्वं तत्प्रेरितेनैव तेन श्रेष्ठिना विहितं, नात्मवशेन, अपरंच-तस्यैव मोहनरेन्द्रस्यान्तरङ्गः शोकनामा सुभटः समस्ति, यद्वशीकृता एते देहिनः प्रकृष्टसत्त्वनिधयोऽपि सद्यः प्रकटयन्ति दैन्यं कुट्टयन्ति शिरांसि ताडयन्त्युरांसि मूर्छन्ति मुहुः लुठन्त्यशुद्धवसुधातले रुदन्ति निवादितवदनाः शोचन्ति प्रसारितचरणाः आक्रन्दन्ति विस्वरं, ततो हा तात ! हा मात ! रित्यादि पूत्कुर्वन्तः कुर्वन्ति तास्ताः सदुद्विजनशोचनीयाश्चेष्टाः, ततो मिथ्याभिमानसुभटस्य पृष्ठत एवासौ शोकनामा सुभटस्तस्यैव बालकस्य मरणसमये तेनैव महीभृता प्रेषितः, ततः प्रविशद्भि-र्दृष्टं, भवाद्भिः क्रन्दनादिकम्। चेष्टितं यद् गृहे तस्य, तत् सर्वं तद्विजृम्भितम्॥१॥ कियच्चेदं महीनाथ!, तस्य राज्ञो विचेष्टितम्? । भवावर्त्तपुरे भङ्गैर्विचित्रैर्जृम्भते हि सः ॥२॥ यतः प्रेषयति क्वापि, रतिहास्यभयैः समं । पृष्ठतो रतिशोकाख्यौ, दुष्टः प्रेषयति क्षणात्॥३॥ क्वापि हर्षभटं प्रेष्य, विषादं प्रेषयत्यसौ । क्वापि स्नेहं समादिश्य, द्वेषमादिशति क्षणात् ॥४॥ विश्रम्भभृत्यं व्यापार्य, तत्रैव तनुते भयम् । मदमादिश्य कुत्रापि, दैन्यमाविष्करोत्यसौ ॥५॥ मत्सरेर्ष्याजुगुप्सादिस्वभृत्यैरपरैरपि । विश्वं विडम्बयत्येष, राजमानाविडम्बनैः ॥६॥ अन्यच्च किं बहूक्तेन, त एव न विडम्बिताः । अनेन दुष्टभूपेन, ये निर्वृत्तिपुरीं गताः ॥ ७ ॥ ततो-ऽतिगुरुसंवेगभावितेन महीभृता । मोहचेष्टितभीतेन, प्रणम्याभिहितो गुरुः ॥८॥ मिथ्यात्वोदधिमग्नोऽहं, भगवन्नुद्धृतस्त्वया । विधेहि करुणाम्भोधे!, प्रसादमधुनाऽपि तम्॥९॥ मोहराजभटोद्भीतिमतिक्रान्तां सुखावहाम्। द्रुतं गच्छामि येनाहं, तां पुरीं निर्वृतिं

पराम् ॥१०॥ ततः केवलिना प्रोक्तं, युक्तमेतद् भवादृशाम् । व्रज त्वं तत्र तत्साधुसार्थमासाद्य सत्वरम् ॥११॥ ततो हृष्टो महीपालश्चन्द्रसेनाभिधं निजम् । पुत्रं राज्ये समादिश्य, दत्त्वा दानमनल्पकम् ॥१२॥ धनञ्जयादिकैर्देवैर्मण्डलीशादिकैर्नरैः । कृते महोत्सवे हृष्टैर्जिनचैत्येषु सर्वतः ॥१३॥ व्रतं जग्राह तस्यान्ते, विधिना योगिनां पतेः । समं सामन्तमन्त्राद्यैर्लोकैरन्तःपुरेण च ॥१४॥ ततो मुनीशनिर्दिष्टसम्यग्मार्गेण निर्वृतिम् । गतः पुरीमसौ सर्वमोहव्यापारदूरगाम् ॥१४॥

## ॥ इति नृपविक्रमराजचरितं समाप्तम् ॥

आदिशब्दात् सम्यक्त्वस्थैर्यमाहात्म्येन सुरैरपि सम्पादिताज्ञाः अपरेऽप्यत्र सुलसादयः प्राणिनो द्रष्टव्याः ॥ अथ सम्यक्त्वस्यैव गुणोत्कर्षमाह—

**अंतोमुहुत्तमित्तंपि फासियं जेहिं होज्ज सम्मत्तं । तेसिं अवड्ढपोग्गलपरियट्टो चेव संसारो ॥ १०४ ॥**

अन्तर्मुहूर्त्तमात्रमपि स्पृष्टं-आसादितं यैः सम्यक्त्वं भवेत् ते यद्यपि पश्चात् कथमपि तीर्थकराशातनादिमहापापव्यापारेषु प्रवर्त्तन्ते तथापि तेषामुत्कृष्टतोऽप्यपार्द्धपुद्गलपरावर्त्तमात्रक एव संसारः, अपगतमर्द्धं यस्मादसावपार्धः स चासौ पुद्गलपरावर्त्तश्चापार्द्धपुद्गलपरावर्त्तः, पुद्गलपरावर्त्तस्यार्द्धमित्यर्थः, तदप्युपलक्षणत्वाद्देशोनमितीह द्रष्टव्यं । अथ कोऽयं पुद्गलपरावर्त्तः ?, उच्यते, यदा नारकतिर्यङ्नरामरभवेषु पर्यटता जीवेन यथासम्भवं गृहीत्वा औदारिकवैक्रियतैजसकार्मणभाषाऽऽनपानमनोलक्षणैः सप्तभिः प्रकारैः सर्वोऽपि पुद्गलराशिः परिणामितो भवति तदा पुद्गलपरावर्त्तः पूर्यत इत्येके, अन्ये तु द्रव्यक्षेत्रकालभावभेदाच्चतु-

विधं प्रत्येकं सूक्ष्मबादरभेदभिन्नं चामुं प्ररूपयति, तत्र द्रव्यतस्तावदौदारिकवैक्रियतैजसकार्मणलक्षणैश्चतुर्भिः प्रकारैर्यदा सर्वोऽपि पुद्गलराशिर्नानाभवेषु जीवेन परिणमय्य मुच्यते तदा भवति, क्षेत्रतस्तु यदा नानाभवेषु म्रियमाणः प्राणी समस्तानपि नभःप्रदेशान् प्रत्येकं मरणेर्व्याप्नोति तदा पूर्यते, कालतस्तु उत्सर्पिण्यां यावन्तः समयास्तान् सर्वानपि बहुभवेषु म्रियमाणो जन्तुर्यदा प्रत्येकं मरणेर्व्याप्नोति तदा सम्पद्यते, भावतस्त्वसंख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानतुल्यान्यनुभागबन्धाध्यवसायस्थानानि भवन्ति तानि सर्वाण्यपि प्रभूतभवेषु म्रियमाणोऽसुमान् यदा प्रत्येकं मरणसमये स्पृशति तदा समाप्यते, क्रमोत्क्रमादिभेदेन च या अन्यत्र सूक्ष्मबादरादिचिन्ता कृता साऽत्र न विहिता, अप्रस्तुतप्रायत्वादन्यत्र निर्णीतत्वाद् ग्रन्थविस्तरभयाच्चेति, इह च प्रकृते क्षेत्रपुद्गलपरावर्त्तस्य देशोनमर्द्धं सम्भाव्यते, निश्चयं तु केवलिनो बहुश्रुता वा विदन्ति, तथाविधव्यक्तनिर्णयस्य क्वाप्यदर्शनात्, इदमपि देशोनं पुद्गलपरावर्त्तार्द्धमनन्तोत्सर्पिण्यवसर्पिणीकालमानमवगन्तव्यमित्यलं विस्तरेण, तदेतदिह तात्पर्यम्-समस्ति सम्यक्त्वस्य तन्माहात्म्यं येन सकृदपि तस्मिन्नवाप्ते गोशालकादिवत् कृतोत्कृष्टपापव्यापारोऽपि जन्तुः सन् उत्कृष्टतोऽप्यनन्तोत्सर्पिण्यवसर्पिणीकालनिर्वृत्तदेशोनपुद्गलपरावर्त्तार्द्धमात्रमेव संसारं पर्यटति, तदन्ते त्ववश्य लब्धजिनधर्मसमग्रसामग्रीकः क्षपितकर्मा निर्वृतिमवाप्नोतीति गाथार्थः ॥ अथामरनरसम्पदादिलाभादपि सम्यक्त्वस्य दुर्लभत्वलक्षणं गुणमाह—

**लब्भंति अमरनरसंपयाओ सोहग्गरूवकलियाओ । न य लब्भइ सम्मत्तं तरंडयं भवसमुद्दस्स ॥ १०५ ॥**

सुबोधैव, यथा च तस्य दुर्लभत्वं तथा प्रागेवोक्तमिति । उक्तं गुणद्वारं,इदानीं कतिभेदं तद्भवतीति द्वारनिर्णयार्थमाह—

**खइयं खओवसामियं वेयय उवसामियं च सासणयं । पंचविहं पण्णत्तं सम्मत्तं वीयराएहिं ॥ १०६ ॥**

तत्र क्षायोपशमिकौपशमिकसास्वादनलक्षणास्त्रयः सम्यक्त्वभेदाः प्रागेव दर्शिताः, चतुर्ष्वनन्तानुबन्धिषु मिथ्यात्वसम्यक्त्वमिश्रपुञ्जेषु च क्षीणेषु क्षायिकं सम्यक्त्वमुच्यते, एष्वनन्तानुबन्ध्यादिषु षट्सु कर्मसु क्षपितेषु सम्यक्त्वपुञ्जे बहुतरे क्षपिते चरमग्रासेऽवतिष्ठमानेऽद्यापि सम्यक्त्वपुद्गलानां कियतामपि वेद्यमानत्वाद्वेदकमिदमुच्यते, क्षायोपशमिकसम्यक्त्वेऽपि तत्पुद्गलानां वेद्यमानत्वात् तदपि वेदकं प्राप्नोतीति न प्रेर्यं, समयपरिभाषयाऽत्रैवैतत्, सञ्ज्ञातरूढेरिति, सम्यक्त्वं पञ्चविधं प्रज्ञप्तं वीतरागैरिति गाथार्थः ॥ गतं कतिभेदं सम्यक्त्वमिति द्वारं, अथातिचारद्वारं बिभणिषुराह–

**संका कंख विगिंछा पासंडीणं च संथवपसंसा । तस्स य पंचऽइयारा वज्जेयव्वा पयत्तेणं ॥ १०१ ॥**

तस्य च सम्यक्त्वस्य पञ्चातिचाराः प्रयत्नेन वर्जनीयाः, तत्रातिचरति–मालिन्योत्पादनेन सम्यक्त्वमुद्रां लङ्घयति यैस्तेऽतिचाराः, मिथ्यात्वमोहनीयकर्मोदयादात्मनोऽशुभपरिणामविशेषा इत्यर्थः, तत्र शंकनं शंका भगवदर्हत्प्रणीतात्यन्तगहनजीवादिपदार्थेषु मतिदौर्बल्यात् सम्यगनवबुध्यमानेषु संशयकरणमित्यर्थः, किमिदमित्थं स्यान्न वेति, सा च शंका देशतः सर्वतश्च, तत्र किमयं जीवो नित्योऽनित्यो वेत्याद्येकदेशविषया देशतः, मूलत एव जीवः किं समस्ति न वेत्यादि सर्वविषया सर्वतः, इयं च द्विविधापि शंका सम्यक्त्वं मालिनयति, आगमप्रतिपादितं हि मतिदौर्बल्यादिभिर्यद्यपि क्वचिन्नावबुध्यते तथापि तत् सर्वं तथेति प्रतिपत्तव्यं, सर्वज्ञोक्तत्वात् तदन्यपदार्थवत्, उक्तश्च-कत्थइ मइदुब्बल्लेण तव्विहायरियविरहओ वावि । नेयगहणत्तणेण य नाणावरणोदएणं च ॥१॥ हेऊदाहरणासंभवेऽवि सइ सुट्ठु जं न बुज्झेज्जा । सव्वण्णुमयमवितहं तहावि तं चितए मइमं ॥ २ ॥ अणुवकयपराणुग्गहपरायणा जं जिणा जगप्पवरा । जियरागदोसमोहा नन्नहावाइणो तेण ॥३॥"१॥ कांक्षणं

कांक्षा-अन्यान्यदर्शनग्रहः, शाक्यादिदर्शनानामपि सर्वज्ञदर्शनतुल्यत्वेन विकल्पनमित्यर्थः, साऽपि कांक्षा देशतः सर्वतश्च, तत्र यथा सर्वज्ञागमे तथाऽन्यत्रापि क्वचित् शाक्यादिदर्शने चित्तनिग्रहादिकं कंचिद्धर्म्मं प्रतिपाद्यमानं श्रुत्वा यदैवं विकल्पयति यथेदमप्येकं दर्शनं सर्वज्ञदर्शनेन तुल्यमेव, अत्रापि चित्तनिग्रहादेर्धर्मस्य प्रतिपादनात् तदा देशतः, यदा तु जैमिनिकणभक्षाक्षपादादिषु बहुषु जीवदयादिकं कमपि धर्मं प्रतिपाद्यमानं श्रुत्वा इत्थं विकल्पयति सर्वाण्यपि दर्शनानि सर्वज्ञदर्शनतुल्यान्येव, जीवदयादेः सर्वत्र समानत्वात् तदा सर्वतः, इयमपि द्विविधाऽपि सम्यक्त्वं दूषयति, घुणाक्षरन्यायेन चित्तनिग्रहजीवदयादेस्तुल्यत्वेऽपि शेषैः प्रभूतधर्मैरन्यदर्शनानामतीव व्यभिचारात्, उक्तञ्च-"वण्णाइमेत्ततुल्लो असरिच्छो सेससारधम्मेहिं । मरगयमणिमाहप्पं कायमणी पावए किहणु ? ॥ १ ॥ अह सेसावि हु धम्मा तुल्लच्चिय सेसदरिसणेसुंपि । हंत ! जिणदरिसणाओ तेसिमभेओ हवइ एवं ॥ २ ॥" तथा ऐहिकामुष्मिकत्वात् ( मुष्मिकान् ) सुखादीनर्थान् कांक्षतः कांक्षा मन्तव्या, इयमपि सम्यक्त्वातिचाररूपैव, तीर्थकरप्रतिपिद्धाचरणस्वरूपेन तन्मालिन्यहेतुत्वादिति २ । विचिकित्सा मतिविभ्रमः, युक्त्यागमोपपन्नेऽर्थे फलं प्रति सम्मोहः, किमस्याः सिकताकणकवलनकल्पायाः अतिकष्टशिरस्तुण्डमुण्डनतपःप्रभृतिक्रियाया ममायत्यां फलसम्पद् भविष्यति न वेति, फलवतीनामफलवतीनां च कृषीवलादिक्रियाणामिह दर्शनात्, न चेयं शंकातो न भिद्यत इति प्रेर्यं, तस्याः सकलासकलद्रव्यविषयत्वेन विवक्षितत्वात्, विचिकित्सायास्तु क्रियामात्रविषयत्वेन एव विवक्षितत्वात् इति, अतिसूक्ष्मेक्षिकायां तु पंचापि प्रस्तुताचारा अभेदिन एव प्राप्नुवन्ति, मिथ्यात्वमोहनीयोदयजन्यत्वादिमात्रेण सर्वेषामप्येकरूपत्वात्, अथवा विदितयथावस्थितवस्तुत्वाद्विद्वांसः- साधवः तेषां जुगुप्सा विद्वज्जुगुप्सेत्येवमिह व्याख्यायते, एषाऽपि सम्यक्त्वमतिचरत्येव, यदा हि

मलमलिनादिस्वरूपान् साधूनवलोक्य कश्चिदेवं निन्दति-हन्त कोऽत्र दोषः स्यात् यदि स्वल्पेनापि प्रासुकजलेन शरीरादः क्षालनममी कुर्वीरन्निति तदा मलिनीक्रियते एव सम्यक्त्वं, तीर्थकरोक्तनिर्विभूषणतामार्गस्य निर्युक्तिकस्वविकल्पमात्रेणाप्रमाणीकरणात्३, पापण्डिनां-शाक्यादीनां संस्तवः एकत्रनिवासभोजनालापादिलक्षणः परिचयोऽत्र गृह्यते, न स्तुतिरूपः, तस्यानन्तरं वक्ष्यमाणत्वात्, तथा च लोके सम्पूर्वः स्तौतिः परिचये रूढ एव 'असंस्तुतेषु प्रसभं कुलेष्वि'त्यादाविति, अनेनापि अतिचरत्येव प्राणी सम्यक्त्वं, तथाहि- तत्परिचयात् तत्प्रक्रियाश्रवणं तत्क्रियादर्शनं च सम्पद्यते, तच्च जीवेन पूर्वमनादौ संसारे मिथ्यादृष्ट्यवस्थायामसकृदनुभूतं, ततस्तच्छ्रवणदर्शनसहकारिकारणमात्रात् स्वभ्यस्तमदिरापानस्य तच्छ्रवणदर्शनयोस्तत्पानाभिलाष इव मिथ्यात्वपुञ्जोदये पुनरपि समुल्लसति जीवस्य मिथ्यावबोध इति४ । तेषामेव पाषण्डिनां प्रशंसा यथा पुण्यभाज एते सफले जन्मजीविते अमीषां, अनयाऽपि सम्यक्त्वं मालिन्यमुपयाति, एतत्करणे हि तेषां मिथ्यात्वे स्थिरीकरणमुत्पादितं भवति, तपःप्रभृतिगुणा अपि तेषां न प्रशंसनीयाः, अज्ञानकष्टरूपत्वेनानर्थफलत्वात्तेषां मिथ्यात्वे तत्स्थिरीकरणप्रसंगाच्च, अपरंच- तत्प्रशंसाकरणे आत्मनोऽन्येषां च शृण्वतां तेषु गाढं पक्षपातः प्रवर्त्तते, तस्मिंश्च सति पुनरपि तदेव मिथ्यात्वगमनं, स एव जिनशासने प्रद्वेषः समुल्लसतीति, अथ एते पंचाप्यतिचाराः प्रयत्नेन वर्जनीया इति गाथार्थः ॥ अतिचारप्रस्तावादन्येनापि येन सम्यक्त्वं दूष्यते तन्निषेधार्थमाह—

पिंडप्पयाणहुणणं सोमग्गहणाई लोयकिच्चाइं । वज्जसु कुलिंगिसंगं लोइयतित्थेसु गमणं च ॥ १०८ ॥

पिण्डप्रदानं पितॄणां प्रतीतं हवनं-अग्न्यादौ तिलादिप्रक्षेपः, अग्निकारिकाकरणमित्यर्थः, सोमग्रहणं प्रसिद्धमेव, आदिग्रहणात् संक्रान्तिमहानवम्यादिपरिग्रहः, एतानि लौकिककृत्यानि वर्जनीयानि, पिण्डप्रदानस्य निर्युक्तिकत्वेन तीर्थकरैरननुज्ञातत्वात्,

हवनस्य सावद्यत्वेन तैरेव प्रतिपिद्धत्वात् , सोमसूर्यग्रहणयोस्तु भगवत्यां द्वादशशते षष्ठोद्देशके विस्तरतोऽपाकृतत्वात्, निर्युक्तिक-
त्वात् , तथाहि-राहुश्चंद्रं गिलतीत्यत्र प्रष्टव्यं- किं देवेन देवो गिल्यते? विमानेन वा विमानं?, तत्राद्यः पक्षोऽसंगत एव, तद्देवानाम-
समदृष्टयगोचरत्वात्, न च गृहं गृहेण गिल्यत इति क्वापि दृष्टमिष्टं वा, अथेदं गृहमनेन गृहेण ग्रस्तमिति लोके प्रवादो दृश्यत
एवेति ब्रूषे, साध्विदं प्रतिपादयसि, केवलं गृहं गृहेणावलुप्तं दृष्ट्वा लोके एवं वक्तारो भवन्ति, नत्वपरगिलनरूपं किमपि ग्रसन-
मस्ति, एतच्चेहाप्यस्माभिरिष्यत एव, सूर्यचन्द्रविमानानां राहुविमानेनान्तर्द्धानाभ्युपगमादित्यलं विस्तरेण, एवमन्यान्यपि लोक-
हेर्या प्रवृत्तानि कृत्यानि कानिचित् जीवघातहेतुत्वेन अपराणि तु निष्फलत्वेन सर्वज्ञैरनुपदिष्टत्वात् वर्जनीयानि, इदानीमतिचार-
द्वारे निवारितप्रायमपि लोके प्राचुर्येण प्रवृत्तत्वात् पुनरपि निवारयन्नाह- तथा कुलिंगिभिः-शाक्यादिभिः सह संग-सम्भाषणादिकं
लौकिकायतनेषु गमनं च वर्जयेदिति सम्बन्ध इति गाथार्थः ॥ ननु किमित्येवं कुलिंगसंगादिवर्जनं पुनः पुनरुपदिश्यत आह—

मिच्छत्तभावओच्चिय जीवो भवसायरे अणाइम्मि । दढचित्तोवि छलिज्जइ तेण इमो नणु कुसंगेहिं ॥ १०९ ॥

प्रागतार्थैव ॥ उक्तमतिचारद्वारम्, इदानीं लिंगद्वारनिर्णयार्थमाह—

जस्स भवे संवेओ निव्वेओ उवसमो य अणुकंपा । अत्थिक्कं जीवाइसु नज्जइ तस्सऽत्थि सम्मत्तं ॥ ११० ॥

यस्य भवेत् संवेगो निर्वेदः उपशमोऽनुकम्पा जीवादिष्वास्तित्वं च तस्य जन्तोरेतैर्लिंगैर्ज्ञायते यदुतास्ति सम्यक्त्वं ॥ तत्र
नरामरसुखपरिहारेण मुक्तिसुखाभिलापः संवेगः, उक्तंच-"नरविबुहेसरसुक्खं दुक्खं चिय भावओऽवि मन्नंतो । संवेगओ न सुक्खं
मुक्खं मोत्तूण पत्थेइ ॥ १ ॥" नारकतिर्यगादिसांसारिकदुःखेभ्यो निर्विण्णता निर्वेदः, यदाह— "नारयतिरियनरामरभवेसु निव्वे-

मलमलिनादिस्वरूपान् साधूनवलोक्य कश्चिदेवं निन्दति-हन्त कोऽत्र दोषः स्यात् यदि स्वल्पेनापि प्रासुकजलेन शरीरादः क्षालनममी कुर्वीरन्निति तदा मलिनीक्रियते एव सम्यक्त्वं, तीर्थकरोक्तनिर्विभूषणतामार्गस्य निर्युक्तिकस्वविकल्पमात्रेणाप्रमाणीकरणात्३, पापण्डिनां-शाक्यादीनां संस्तवः एकत्रनिवासभोजनालापादिलक्षणः परिचयोऽत्र गृह्यते, न स्तुतिरूपः, तस्यानन्तरं वक्ष्यमाणत्वात्, तथा च लोके सम्पूर्वः स्तौतिः परिचये रूढ एव 'असंस्तुतेषु प्रसभं कुलेष्वि'त्यादाविति, अनेनापि अतिचरत्येव प्राणी सम्यक्त्वं, तथाहि- तत्परिचयात् तत्प्रक्रियाश्रवणं तत्क्रियादर्शनं च सम्पद्यते, तच्च जीवेन पूर्वमनादौ संसारे मिथ्यादृष्ट्यवस्थायामसकृदनुभूतं, ततस्तच्छ्रवणदर्शनसहकारिकारणमात्रात् स्वभ्यस्तमादिरापानस्य तच्छ्रवणदर्शनयोस्तत्पानाभिलाष इव मिथ्यात्वपुञ्जोदये पुनरपि समुल्लसति जीवस्य मिथ्यावबोध इति४ । तेषामेव पाषण्डिनां प्रशंसा यथा पुण्यभाज एते सफले जन्मजीविते अमीषां, अनयाऽपि सम्यक्त्वं मालिन्यमुपयाति, एतत्करणे हि तेषां मिथ्यात्वे स्थिरीकरणमुत्पादितं भवति, तपःप्रभृतिगुणा अपि तेषां न प्रशंसनीयाः, अज्ञानकष्टरूपत्वेनानर्थफलत्वात्तेषां मिथ्यात्वे तत्स्थिरीकरणप्रसंगाच्च, अपरंच- तत्प्रशंसाकरणे आत्मनोऽन्येषां च शृण्वतां तेषु गाढं पक्षपातः प्रवर्त्तते, तस्मिंश्च सति पुनरपि तदेव मिथ्यात्वगमनं, स एव जिनशासने प्रद्वेषः समुल्लसतीति, अथ एते पंचाप्यतिचाराः प्रयत्नेन वर्जनीया इति गाथार्थः ॥ अतिचारप्रस्तावादन्येनापि येन सम्यक्त्वं दूष्यते तन्निषेधार्थमाह—

पिंडप्पयाणहुणणं सोमग्गहणाई लोयकिच्चाइं । वज्जसु कुलिंगिसंगं लोइयतित्थेसु गमणं च ॥ १०८ ॥

पिण्डप्रदानं पितॄणां प्रतीतं हवनं-अग्न्यादौ तिलादिप्रक्षेपः, अग्निकारिकाकरणमित्यर्थः, सोमग्रहणं प्रसिद्धमेव, आदिग्रहणात् संक्रान्तिमहानवम्यादिपरिग्रहः, एतानि लौकिककृत्यानि वर्जनीयानि, पिण्डप्रदानस्य निर्युक्तिकत्वेन तीर्थकरैरननुज्ञातत्वात्,

दिषु च विनाशो न सम्पद्यते, तदाऽसौ सापेक्षः, इह चायं मुनीन्द्रोपदेशो-यच्छ्रावकेण त एव गवादयः परिग्रहीतव्या ये अबद्धा
अप्यवमेवासते, भीतपर्षदा च तथा तेन भाव्यं यथा बन्धादिमन्तरेणापि दृष्टिदर्शनादिमात्रत एव भीतो दासादिः सम्यक् प्रवर्त्तते,
अथ कोऽपि न यदा प्रवर्त्तते तदा यथोक्तस्वरूपं सापेक्षं बन्धमपि कुर्वन्न व्रतमतिचरति, निरपेक्षे त्वस्मिन् विधीयमाने व्रताति-
चार इति १। वधो-यष्टिकपादिभिः ताडनं, अर्थानर्थादिका तु भावना अत्रापि बन्धवत् कार्या, नवरं निरपेक्षो वधो निर्दयताडना,
भीतपर्षदोऽपि च यदि तस्य कश्चिन्न बिभेत्यतोऽसंगतं किंचिदाचरति तदा मर्माणि मुक्त्वा सदयस्य तं लतया दवरकेण सकृद् द्विर्वा
ताडयतोऽपि सापेक्षो वधः२। छविः-त्वक् तद्योगाच्छरीरमपि छविस्तस्य छेदं असिपुत्रिकादिभिः पाटनं छविच्छेदः, अत्रापि भावना
निगदितानुसारत एव कार्या, नवरं करचरणकर्णनासागलपुच्छाद्यवयवान्निर्दयं छिन्दानस्यासौ निरपेक्षः, अरुर्गण्डं मांसांकुरादिकं
रागाद्यदूषितमतेः सदयं छिन्दतः सापेक्षं ३। भरणं भारोऽतीवभारोऽतिभारः प्रभूतधान्यपूगफलादेर्गन्त्रिगोपृष्ठादावारोपणमतिभा-
रारोपणं, इह चैवं पूर्वमुनिनिगदिता यतना-या द्विपदचतुष्पदवाहनेन जीविका सा श्रावकेण दूरत एव परित्याज्या, अथ कथ-
मप्यन्यथाऽसौ न भवेत् तदा द्विपदस्तावद्यावन्तं भारं स्वयमुत्क्षिपत्यवतारयति च तावन्तमेव वाह्यते, चतुष्पदस्तु यावन्तं भारं
वोढुं क्षमते ततोऽसौ कियताऽप्यूनः क्रियते, हलशकटादिषु पुनरुचितवेलायां असौ मुच्यते४। भक्तपानयोः-भोजनोदकयोर्व्यवच्छेदो-
निवारणं भक्तपानव्यवच्छेदः, अर्थानर्थादिचिन्ता अत्रापि तथैव कार्या, नवरं सापेक्षो रोगचिकित्सार्थमसौ सम्भवति, अपराध-
कारिणि च वाचैव ब्रूयात्, यथा न दास्ये तव भोजनादि, शान्तिनिमित्तं चोपवासं कारयेत्, किं बहुना ?, यथा मूलगुणस्य
प्राणातिपातविरमणस्य मालिन्यं न भवति तथा यतितव्यमिति५। अत्राह कश्चित्-ननु प्राणिनामतिपात एवानेन प्रत्याख्यातो, न

णूनि-महाव्रतापेक्षया लघूनि व्रतान्यणुव्रतानि, अणोः—सर्वगुणापेक्षया यतिभ्यो लघोर्वा-श्रावकस्य व्रतान्यणुव्रतानि, अथवा देशनाकाले महाव्रतप्ररूपणा ततोऽनु-पश्चात् प्ररूपणीयानि व्रतान्यनुव्रतानि, तत्प्रथमतया हि धर्मं शुश्रूषोः प्रथमं महाव्रतानि प्ररूपणीयानि, ततस्तत्प्रतिपत्त्यसमर्थस्य पश्चादनुव्रतानि, यदाह-" जइधम्मस्सऽसमत्थे जुज्जइ तद्देसणंपि साहूण " मिति, पञ्च च तान्यनुव्रतानि च पञ्चाणुव्रतानि-स्थूलप्राणातिपातविरमणादीनि, तत्रान्यतीर्थिकैरपि प्रायः प्राणित्वेन प्रतीयमानत्वात् स्थूला द्वित्रिचतुःपञ्चेन्द्रियास्ते च ते उच्छ्वासादिप्राणयोगात् प्राणाश्च स्थूलप्राणाः, भवति च तद्योगात्तद्व्यपदेशो यथा दण्डयोगाद्दण्डः पुरुष इति, तेषामतिपातो-वधो हिंसेतियावत् तद्विरमणं-सङ्कल्पमाश्रित्य प्रत्याख्यानं प्रथममणुव्रतं, प्रत्याख्यानं चावश्यचूर्ण्यामेवमुक्तम्-" थूलगं पाणाइवायं संकप्पओ पच्चक्खामि जावज्जीवाए दुविहंतिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि' । संकल्पतो वधाभिसन्धिमाश्रित्य, नारम्भतोऽपि, गृहिणामारम्भवर्जनासम्भवात्, एतच्च व्रतं प्रतिपन्नेन पंचातिचाराः कदाचिदपि नासेवनीयाः, ते चामी-बन्धो वधः छविच्छेदोऽतिभाराधिरोपणं भक्तपानव्यवच्छेदश्चेति, तत्र बन्धो मनुष्यगवादीनां रज्जुदामनकादिभिः संयमनं, अयं च द्विविधः सम्भवति-अर्थाय अनर्थाय चेति, तत्रानर्थाय तावन्न कदाचिद्विवेकिनाऽसौ समाचरणीयो, यश्चार्थाय सोऽपि द्विविधः- सापेक्षो निरपेक्षश्च, तत्र यदा चतुष्पदचौरादिकं प्रदीपनकमरणाद्यपेक्षां मुक्त्वा निर्दयं निश्चलमत्यर्थमाक्रम्य बध्यते तदा निरपेक्षो, यदा तु चतुष्पदादि तावत्तथा बध्नाति यथा प्रदीपनकादिषु तद्बन्धनस्य मोचनं छेदनादिकं च कर्तुं शक्यते, द्विपदेषु तु दासं दासीं चौरं वा पाठादि-प्रमत्तं पुत्रादिकं वा तन्मरणादिभीरुतया सदयं तथा बध्नाति यथा बद्धानामपि तेषामंगानि सप्रवीचाराणि भवन्ति, प्रदीपनका-

ऽत्र द्रष्टव्य इति गाथार्थः ॥ अथ चरणस्वरूपमेव किञ्चिद्विस्तरतो बिभणिषुर्द्वारगाथामाह—

**किं चरणं १ कइ भेयं २ तदरिह ३ पडिवत्तिविहिपरूवणया ४। उस्सग्गववाएहि य तं कस्स ५ फलं च किं तस्स ६ ॥११३॥**

किं चरणमिति तत्स्वरूपं तावद् वक्तव्यं, ततः कतिभेदं तदिति प्रतिपादनीयं, ततस्तदर्हाः-चरणयोग्या जन्तवो निरूपणीयाः, ततोऽपि चरणस्य प्रतिपत्तिविधिप्ररूपणा कार्या, ततश्चोत्सर्गापवादैश्च, शुद्धामिति शेषः; तच्चरणं कस्य साधोर्भवतीत्यभिधानीयं, फलं वा-साध्यं वा किं तस्य-चरणस्येति च पर्यन्ते वाच्यमिति द्वारगाथासङ्क्षेपार्थः॥ विस्तरार्थं तु बिभणिषुः स्वयमेव सूत्रकार आह—

**सावज्जजोगविरई चरणं ओहेण देसियं समए। भेएण उ दुवियप्पं देसे सव्वे य नायव्वं ॥ ११४ ॥**

ओघेन-सामान्येन देशसर्वादिकां विशेषविचारणामनपेक्ष्येत्यर्थः, चरणं चारित्रं 'समये' सिद्धांते देशितं- कथितं, किंभूतं इत्याह-सह अवद्येन-पापेन वर्त्तत इति सावद्याः योगा-जन्तुघातादिनिबन्धनारम्भादिरूपास्तेषु सावद्ययोगेषु विरतिः-निवृत्तिश्चरणं; सपापव्यापारपरिहाररूपमित्यर्थः, गतं किं चरणं इति द्वारं। कतिभेदं तदित्येतन्निर्णयार्थमाह-भेदेन तु चिन्त्यमाने तद् द्विविकल्पं- द्विप्रकारं चरणं ज्ञातव्यं, तदेव द्वैविध्यमाह-देशे स्थूलप्राणातिपातादौ सर्वस्मिंश्च स्थूलसूक्ष्मजीवघातादौ विरतिरूपं चरणं बोद्धव्यं, देशचारित्रं सर्वचारित्रं चेत्यर्थः, इति गाथार्थः ॥ कस्य पुनस्तावद्देशचरणं भवतीत्याह—

**देसचरणं गिहीणं मूलुत्तरगुणवियप्पओ दुविहं। मूले पंच अणुव्वय उत्तरगुण दिसिवयाईयं ॥ ११५ ॥**

देशचरणं गृहिणामेव भवति, न यतीनां, तेषां सर्वचारित्र एवाधिकारात्, ननु देशचरणमपि सम्भवद्भेदमेकरूपं वेत्याह-मूलोत्तरगुणविकल्पतो-मूलोत्तरगुणभेदाभ्यां तदपि द्विविधं, तत्र मूले-मूलगुणविषये चिन्त्यमाने पञ्चाणुव्रतानि ज्ञातव्यानि, तत्रा-

चारित्रभेदौ देशचारित्रभेदौ च

विमलगुणसमग्रं येन सम्यक्त्वरत्नं, हृदि निहितमनन्तज्योतिरुद्भासनाय।
विबुधजनसमाजे स श्रियं प्राप्य तूर्णं, निरुपमसुखरूपां निर्वृत्तिं सम्प्रयाति ॥१॥
जनितविविधदुःखं भ्रामिता येन यूयं, भवगहनमनन्तान् पुद्गलावर्त्तलक्षान्।
परिहरत तदेतद् दुष्टमिथ्यात्वमाशु, व्रजथ निहतविघ्ना येन पारं भवाब्धेः ॥२॥

इति श्रीहेमचन्द्रसूरिविरचितोपदेशमालाविवरणे भावनाद्वारे सम्यक्त्वशुद्धिलक्षणं प्रतिद्वारं समाप्तम् ॥

साम्प्रतं चरणशुद्धिद्वारं बिभणिषुः पूर्वद्वारेण सह सम्बन्धाभिधानगर्भां सूत्रकारः स्वयमेव गाथामाह—

**चरणरहियं न जायइ सम्मत्तं मुक्खसाहयं एक्कं। तो जयसु चरणकरणे जइ इच्छसि मोक्खमचिरेणं ॥११२॥**

चरणरहितं केवलं एकं सम्यक्त्वं मोक्षसाधकं न जायते, तस्माच्चरणस्य करणं-निर्वर्त्तनं, तदङ्गीकार इत्यर्थः, तत्र यतस्व-प्रयत्नं कुरु यदि मोक्षमचिरेण—स्वल्पकालेनेवेच्छसि, इदमुक्तं भवति-लब्धेऽपि सम्यक्त्वे प्रभूतकालेनापि तावच्चारित्रं स्पृष्ट्वैव मोक्षः प्राप्तव्यो, नान्यथा, केवलसम्यक्त्वादेव मोक्षप्रतिषेधात्, यत उक्तम्— सुट्ठुऽवि सम्मद्दिट्ठी न सिज्झई चरणकरणपरिहीणो। जं चेव मोक्खमूलं मूढो तं चेव नासेई ॥ १ ॥ सव्वाओऽवि गईओ अविरहिया नाणदंसणधरेहिं। ता मा कासि पमायं नाणेण चरित्तरहिएण॥२॥ दंसणपक्खो सावय चरित्तभट्ठे य मंदधम्मे य। दंसणचरित्तपक्खो समणे परलोयकंखिम्मी॥३॥" त्यादि, तद्यद्यप्यग्रेऽप्यवश्यं प्रतिपत्तव्यमेवेदं मोक्षार्थिना तदिदानीमेव प्रतिपद्यस्व येन शीघ्रमेव समीहितं सिध्यतीति भावः, तदेवं चरणयुक्तमेव सम्यक्त्वं मोक्षसाधकं, न केवलमित्यतः सम्यक्त्वशुद्धिद्वारानन्तरं चरणशुद्धिद्वारमभिधीयत इति पूर्वद्वारेण सह सम्बन्धः प्रतिपादितो

चरणद्वार-संबंधः

स्य कामिनोऽपि दृढम् । किंनरगेयादधिकः सम्यग्दृष्टेः श्रुतौ रागः॥१॥" तथा अगुणेषु च-गुणरहितेषु प्राणिषु माध्यस्थ्यं-उपेक्षैव तस्य भवति, नतु तद्दोषग्रहणं, यतो निर्दिष्टं-"गुणजीवितनिर्मुक्तो यः स्वत एवार्थतो मृतः प्राणी। सोऽत्र कथं बुद्धिमतां विकत्थनीयः सतां भवती ॥ १ ॥" त्येतानि सम्यग्दृष्टेर्लिङ्गानीति गाथार्थः ॥ तदेवमुक्तानि किं सम्यक्त्वमित्यादिद्वाराणि, तेषां चोपलक्षणत्वादन्यदप्यत्र आकारद्वारं द्रष्टव्यं, ते चामी आकाराः— राजाभियोगगणाभियोगबलाभियोगदेवताभियोगगुरुनिग्रहवृत्तिकान्तारलक्षणाः षट्, तत्राभियोजनं-अनिच्छतोऽपि व्यापारणमभियोगः, राज्ञोऽभियोगो राजाभियोगः, बलं-हठप्रयोगः तेन अभियोगो बलाभियोगः, देवतायाः-कुलदेवतादिकाया अभियोगो देवताभियोगः, गुरूणि--मातापित्रादीनि तेषां निग्रहो-निर्बन्धो, वृत्तिः-प्राणवर्त्तनरूपा, कान्तारं-अरण्यं बाधेतियावत्, वृत्तेः कान्तारं वृत्तिकान्तारं, वृत्तिबाधेत्यर्थः, ननु कथं कान्तारं वृत्तेर्बाधाऽभिधीयते?, उच्यते, तद्धेतुत्वात्तदपीह वृत्तिबाधात्वेन विवक्षितमित्यदोषः, तदयमत्र परमार्थः- प्रत्याख्यातमिथ्यात्वस्य तावत् "नो मे कप्पई अज्जप्पभिई अन्नउत्थिए इ वा अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालित्तएणं आलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा" इत्यादिवचनादन्यतीर्थिकादेरनुकम्पां विहाय दानवन्दनादिकमिह प्रतिषिद्धं, अनुकम्पागोचरापन्नानां तु तेषामपि दानं दातव्यं, यत उक्तम्— "सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं । सत्ताणुकंपणट्ठा दाणं न कहिंचि पडिसिद्धं ॥ १ ॥" ततोऽन्यतीर्थिकादेर्यद्दानादिकं प्रतिषिद्धं तदनुकम्पाया अन्यत्र, अपिच-राजाभियोगादिभिरेतैः षड्भिः कारणैर्भक्तिविरहितो द्रव्यतः समाचरन्नपि कार्त्तिकश्रेष्ठ्यादिभिरिव सम्यक्त्वं नातिचरति, एवमन्यदपि प्रकृतोपयोगि सुधिया स्वयमेव वाच्यमिति ॥

यओ वसइ दुक्खं । अकयपरलोयमग्गो ममत्तविसवेयरहिओऽवि ॥ १ ॥" अपराधवत्यप्यक्षमापरिवर्जनमुपशमः, यदभ्यधायि— 'पयईय व कम्माणं वियाणिउं वा विवागमसुहंति । अवरद्धेऽवि न कुप्पइ उवसमओ सव्वकालंपि ॥ १ ॥" अविशेषतो दुःखितसत्त्वेषु कारुण्यमनुकम्पा, यदवाचि- "दट्ठूण पाणिनिवहं भीमे भवसायरम्मि दुक्खत्तं । अविसेसओऽणुकंपं दुहावि सामत्थओ कुणइ ॥ १ ॥" शंकाकांक्षादिरहितस्य जिनगदिततत्त्वाभ्युपगमो जीवाद्यस्तित्वं, न्यगादि च— "मन्नइ तमेव सच्चं नीसंकं जं जिणेहिं पण्णत्तं । सुहपरिणामो सव्वं कंखाइविसोत्तियारहिओ ॥ १ ॥" इति गाथार्थः ॥ उपलक्षणं चैतद्, अतोऽन्यान्यपि मार्गानुयायीनि सम्यक्त्वगमकानि लिङ्गानि द्रष्टव्यानि, यदाह कियन्तिचिदत्रापि—

**सव्वत्थ उचियकरणं गुणाणुराओ रई य जिणवयणे । अगुणेसु य मज्झत्थं सम्मद्दिट्ठिस्स लिङ्गाइं ॥ १११ ॥**

सम्यग्दृष्टेस्तद्भावगमकान्येतान्यपराण्यपि लिङ्गानि द्रष्टव्यानि, कानि पुनस्तानीत्याह सर्वत्र-देवगुर्वतिथिमातापितृस्वजनपरजनलोकव्यवहारादिषूचितकरणं, सम्यग्दृष्टेर्हि कर्मलाघवात् कुर्वतोऽपि सर्वत्र तत् किमप्यौचित्यमुन्मीलयति येन सर्वस्य प्रीतिरेवोत्पद्यते, न वैमनस्यं, उक्तश्च-"औचित्यक्रमवेदिनः कृतपराभीष्टार्थयत्नाः परं, ते केचित् क्वचिदत्र सन्ति सुधियस्त्रैलोक्यवन्द्यक्रमाः । येषां चन्द्रमरीचिचारुचरितं विश्वप्रमोदप्रदं, चेतोभित्तिषु देहिनां नियमितं सर्वत्र संवीक्ष्यते ॥ १ ॥" तथा ज्ञानादिषु औदार्यगाम्भीर्यमध्यस्थतादिषु च मार्गानुयायिषु गुणेषु सदैवानुरागः, भाविताजिनवचनस्य हि तानवापक्ष्मत्सरत्वात् परगुणेष्वनुराग एवाविर्भवति, न मात्सर्यं, अभिहितं च—" जिणवयणंजणतणुइयमच्छरतिमिराण गहणवावारे । किह णु पयट्टंति न परगुणेसु सुहुमेसुवि मईओ ? ॥ १ ॥" तथा रतिश्च तस्य जिनवचन एव भवति, यदाह—" यूनो वैदग्ध्यवतः कान्तायुक्त-

ऽत्र द्रष्टव्य इति गाथार्थः ॥ अथ चरणस्वरूपमेव किञ्चिद्विस्तरतो विभणिषुर्द्वारगाथामाह—

किं चरणं १ कइभेयं २ तदरिह ३ पडिवत्तिविहिपरूवणया ४। उस्सग्गववाएहि य तं कस्स ५ फलं च किं तस्स ६ ॥११३॥

किं चरणमिति तत्स्वरूपं तावद् वक्तव्यं, ततः कतिभेदं तदिति प्रतिपादनीयं, ततस्तदर्हाः-चरणयोग्या जन्तवो निरूपणीयाः, ततोऽपि चरणस्य प्रतिपत्तिविधिप्ररूपणा कार्या, ततश्चोत्सर्गापवादैश्च, शुद्धामिति शेषः; तच्चरणं कस्य साधोर्भवतीत्यभिधानीयं; फलं वा-साध्यं वा किं तस्य-चरणस्येति च पर्यन्ते वाच्यमिति द्वारगाथासङ्क्षेपार्थः॥ विस्तरार्थं तु विभणिषुः स्वयमेव सूत्रकार आह—

सावज्जजोगविरई चरणं ओहेण देसियं समए। भेएण उ दुवियप्पं देसे सव्वे य नायव्वं ॥ ११४ ॥

ओघेन सामान्येन देशसर्वादिकां विशेषविचारणामनपेक्ष्येत्यर्थः, चरणं चारित्रं 'समये' सिद्धांते देशितं- कथितं, किंभूतं इत्याह-सह अवद्येन-पापेन वर्त्तत इति सावद्याः योगा-जन्तुघातादिनिबन्धनारम्भादिरूपास्तेषु सावद्ययोगेषु विरतिः-निवृत्तिश्चरणं; सपापव्यापारपरिहाररूपमित्यर्थः, गतं किं चरणं इति द्वारं। कतिभेदं तदित्येतन्निर्णयार्थमाह-भेदेन तु चिन्त्यमाने तद् द्विविकल्पं-द्विप्रकारं चरणं ज्ञातव्यं, तदेव द्वैविध्यमाह-देशे स्थूलप्राणातिपातादौ सर्वस्मिंश्च स्थूलसूक्ष्मजीवघातादौ विरतिरूपं चरणं बोद्धव्यं, देशचारित्रं सर्वचारित्रं चेत्यर्थः, इति गाथार्थः ॥ कस्य पुनस्तावद्देशचरणं भवतीत्याह—

देसचरणं गिहीणं मूलुत्तरगुणवियप्पओ दुविहं। मूले पंच अणुव्वय उत्तरगुण दिसिवयाईयं ॥ ११५ ॥

देशचरणं गृहिणामेव भवति, न यतीनां, तेषां सर्वचारित्र एवाधिकारात्, ननु देशचरणमपि सम्भवद्भेदमेकरूपं वेत्याह-मूलोत्तरगुणविकल्पतो-मूलोत्तरगुणभेदाभ्यां तदपि द्विविधं, तत्र मूले-मूलगुणविषये चिन्त्यमाने पञ्चाणुव्रतानि ज्ञातव्यानि, तत्रा-

यओ वसइ दुक्खं । अकयपरलोयमग्गो ममत्तविसवेयरहिओऽवि ॥ १ ॥" अपराधवत्यप्यक्षमापरिवर्जनमुपशमः, यदभ्यधायि— 'पयईय व कम्माणं वियाणिउं वा विवागमसुहंति । अवरद्धेऽवि न कुप्पइ उवसमओ सव्वकालंपि ॥ १ ॥" अविशेषतो दुःखितसत्त्वेषु कारुण्यमनुकम्पा, यदवाचि- "दट्ठूण पाणिनिवहं भीमे भवसायरम्मि दुक्खत्तं । अविसेसओऽणुकंपं दुहावि सामत्थओ कुणइ ॥ १ ॥" शंकाकांक्षादिरहितस्य जिनगदिततत्त्वाभ्युपगमो जीवाद्यस्तित्वं, न्यगादि च— "मन्नइ तमेव सच्चं नीसंकं जं जिणेहिं पण्णत्तं । सुहपरिणामो सव्वं कंखाइविसोत्तियारहिओ ॥ १ ॥" इति गाथार्थः ॥ उपलक्षणं चैतद्, अतोऽन्यान्यपि मार्गानुयायीनि सम्यक्त्वगमकानि लिङ्गानि द्रष्टव्यानि, यदाह कियन्तिचिदत्रापि—

**सव्वत्थ उचियकरणं गुणाणुराओ रई य जिणवयणे । अगुणेसु य मज्झत्थं सम्मद्दिट्ठिस्स लिङ्गाइं ॥ १११ ॥**

सम्यग्दृष्टेस्तद्भावगमकान्येतान्यपराण्यपि लिङ्गानि द्रष्टव्यानि, कानि पुनस्तानीत्याह सर्वत्र-देवगुर्वतिथिमातापितृस्वजनपरजनलोकव्यवहारादिषूचितकरणं, सम्यग्दृष्टेर्हि कर्मलाघवात् कुर्वतोऽपि सर्वत्र तत् किमप्यौचित्यमुन्मीलयति येन सर्वस्य प्रीतिरेवोत्पद्यते, न वैमनस्यं, उक्तञ्च-"औचित्यक्रमवेदिनः कृतपराभीष्टार्थयत्नाः परं, ते केचित् क्वचिदत्र सन्ति सुधियस्त्रैलोक्यवन्द्यक्रमाः । येषां चन्द्रमरीचिचारुचरितं विश्वप्रमोदप्रदं, चेतोभित्तिषु देहिनां नियमितं सर्वत्र संवीक्ष्यते ॥ १ ॥" तथा ज्ञानादिषु औदार्यगाम्भीर्यमध्यस्थतादिषु च मार्गानुयायिषु गुणेषु सदैवानुरागः, भाविताजिनवचनस्य हि तानवापश्चमत्सरत्वात् परगुणेष्वनुराग एवाविर्भवति, न मात्सर्यं, अभिहितं च—" जिणवयणंजणतणुइयमच्छरतिमिराण गहणवावारे । किह णु पयदंति न परगुणेसु सुहुमेसुवि मईओ ? ॥ १ ॥" तथा रतिश्च तस्य जिनवचन एव भवति, यदाह—" यूनो वैदग्ध्यवतः कान्तायुक्त-

स्य कामिनोऽपि दृढम् । किंनरगेयादधिकः सम्यग्दृष्टेः श्रुतौ रागः॥१॥" तथा अगुणेषु च-गुणरहितेषु प्राणिषु माध्यस्थ्यं-उपेक्षैव तस्य भवति, नतु तद्दोपग्रहणं, यतो निर्दिष्टं-"गुणजीवितनिर्मुक्तो यः स्वत एवार्थतो मृतः प्राणी। सोऽत्र कथं बुद्धिमतां विकत्थनीयः सतां भवती ॥ १ ॥ " त्येतानि सम्यग्दृष्टेर्लिङ्गानीति गाथार्थः ॥ तदेवमुक्तानि किं सम्यक्त्वमित्यादिद्वाराणि, तेषां चोपलक्षणत्वादन्यदप्यत्र आकारद्वारं द्रष्टव्यं, ते चामी आकाराः— राजाभियोगगणाभियोगबलाभियोगदेवताभियोगगुरुनिग्रहवृत्तिकान्तारलक्षणाः षट्, तत्राभियोजनं-अनिच्छतोऽपि व्यापारणमभियोगः, राज्ञोऽभियोगो राजाभियोगः, बलं-हठप्रयोगः तेन अभियोगो बलाभियोगः, देवतायाः-कुलदेवतादिकाया अभियोगो देवताभियोगः, गुरूणि--मातापित्रादीनि तेषां निग्रहो-निर्बन्धो, वृत्तिः-प्राणवर्त्तनरूपा, कान्तारं-अरण्यं बाधेतियावत्, वृत्तेः कान्तारं वृत्तिकान्तारं, वृत्तिबाधेत्यर्थः, ननु कथं कान्तारं वृत्तेर्बाधाऽभिधीयते?, उच्यते, तद्धेतुत्वात्तदपीह वृत्तिबाधात्वेन विवक्षितमित्यदोषः, तदयमत्र परमार्थः- प्रत्याख्यातमिथ्यात्वस्य तावत् "नो मे कप्पई अज्जप्पभिई अन्नउत्थिए इ वा अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालित्तएणं आलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा" इत्यादिवचनादन्यतीर्थिकादेरनुकम्पां विहाय दानवन्दनादिकमिह प्रतिषिद्धं, अनुकम्पागोचरापन्नानां तु तेषामपि दानं दातव्यं, यत उक्तम्—"सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं। सत्ताणुकंपणट्ठा दाणं न कहिंचि पडिसिद्धं ॥ १ ॥" ततोऽन्यतीर्थिकादेर्यद्दानादिकं प्रतिषिद्धं तदनुकम्पाया अन्यत्र, अपिच-राजाभियोगादिभिरेतैः षड्भिः कारणैर्भक्तिविरहितो द्रव्यतः समाचरन्नपि कार्तिकश्रेष्ठ्यादिभिरिव सम्यक्त्वं नातिचरति, एवमन्यदपि प्रकृतोपयोगि सुधिया स्वयमेव वाच्यमिति ॥

विमलगुणसमग्रं येन सम्यक्त्वरत्नं, हृदि निहितमनन्तज्योतिरुद्भासनाय।
विबुधजनसमाजे स श्रियं प्राप्य तूर्णं, निरुपमसुखरूपां निर्वृत्तिं सम्प्रयाति ॥१॥
जनितविविधदुःखं भ्रामिता येन यूयं, भवगहनमनन्तान् पुद्गलावर्त्तलक्षान्।
परिहरत तदेतद् दुष्टमिथ्यात्वमाशु, व्रजथ निहतविघ्ना येन पारं भवाब्धेः ॥२॥

इति श्रीहेमचन्द्रसूरिविराचितोपदेशमालाविवरणे भावनाद्वारे सम्यक्त्वशुद्धिलक्षणं प्रतिद्वारं समाप्तम् ॥

साम्प्रतं चरणशुद्धिद्वारं विभणिषुः पूर्वद्वारेण सह सम्बन्धाभिधानगर्भां सूत्रकारः स्वयमेव गाथामाह—

**चरणरहियं न जायइ सम्मत्तं मुक्खसाहयं एक्कं। तो जयसु चरणकरणे जइ इच्छसि मोक्खमचिरेणं ॥११२॥**

चरणरहितं केवलं एकं सम्यक्त्वं मोक्षसाधकं न जायते, तस्माच्चरणस्य करणं-निर्वर्त्तनं, तदङ्गीकार इत्यर्थः, तत्र यतस्व-प्रयत्नं कुरु यदि मोक्षमचिरेण—स्वल्पकालेनेवेच्छसि, इदमुक्तं भवति-लब्धेऽपि सम्यक्त्वे प्रभूतकालेनापि तावच्चरित्रं स्पृष्ट्वैव मोक्षः प्राप्तव्यो, नान्यथा, केवलसम्यक्त्वादेव मोक्षप्रतिषेधात्, यत उक्तम्— सुट्ठुऽवि सम्मद्दिट्ठी न सिज्झई चरणकरणपरिहीणो। ।जं चेव मोक्खमूलं मूढो तं चेव नासेई ॥ १ ॥ सव्वाओऽवि गईओ अविरहिया नाणदंसणधरेहिं। ता मा कासि पमायं नाणेण चरित्तरहिएण॥२॥ दंसणपक्खो सावय चरित्तभट्ठे य मंदधम्मे य।दंसणचरित्तपक्खो समणे परलोयकंखिम्मी॥३॥" त्यादि, तद्यद्यप्यग्रेऽप्यवश्यं प्रतिपत्तव्यमेवेदं मोक्षार्थिना तदिदानीमेव प्रतिपद्यस्व येन शीघ्रमेव समीहितं सिध्यतीति भावः, तदेवं चरणयुक्तमेव सम्यक्त्वं मोक्षसाधकं, न केवलमित्यतः सम्यक्त्वशुद्धिद्वारानन्तरं चरणशुद्धिद्वारमभिधीयत इति पूर्वद्वारेण सह सम्बन्धः प्रतिपादित

ऽत्र द्रष्टव्य इति गाथार्थः ॥ अथ चरणस्वरूपमेव किञ्चिद्विस्तरतो विभणिपुर्द्वारगाथामाह—

**किं चरणं १ कइभेयं २ तदरिह ३ पडिवत्तिविहिपरूवणया ४। उस्सग्गववाएहि य तं कस्स ५ फलं च किं तस्स ६ ॥११३॥**

किं चरणमिति तत्स्वरूपं तावद् वक्तव्यं, ततः कतिभेदं तदिति प्रतिपादनीयं, ततस्तदर्हाः-चरणयोग्या जन्तवो निरूपणीयाः, ततोऽपि चरणस्य प्रतिपत्तिविधिप्ररूपणा कार्या, ततश्चोत्सर्गापवादैश्च, शुद्धामिति शेषः; तच्चरणं कस्य साधोर्भवतीत्यभिधानीयं, फलं वा-साध्यं वा किं तस्य-चरणस्येति च पर्यन्ते वाच्यमिति द्वारगाथासङ्क्षेपार्थः ॥ विस्तरार्थं तु विभणिषुः स्वयमेव सूत्रकार आह—

**सावज्जजोगविरई चरणं ओहेण देसियं समए। भेएण उ दुवियप्पं देसे सव्वे य नायव्वं ॥ ११४ ॥**

ओघेन-सामान्येन देशसर्वादिकां विशेषविचारणामनपेक्ष्येत्यर्थः, चरणं चारित्रं 'समये' सिद्धांते देशितं- कथितं, किंभूतं इत्याह-सह अवद्येन-पापेन वर्त्तत इति सावद्याः योगा-जन्तुघातादिनिबन्धनारम्भादिरूपास्तेषु सावद्ययोगेषु विरतिः-निवृत्तिश्चरणं; सपापव्यापारपरिहाररूपमित्यर्थः, गतं किं चरणं इति द्वारं। कतिभेदं तदित्येतन्निर्णयार्थमाह-भेदेन तु चिन्त्यमाने तद् द्विविकल्पं-द्विप्रकारं चरणं ज्ञातव्यं, तदेव द्वैविध्यमाह-देशे स्थूलप्राणातिपातादौ सर्वस्मिंश्च स्थूलसूक्ष्मजीवघातादौ विरतिरूपं चरणं बोद्धव्यं, देशचारित्रं सर्वचारित्रं चेत्यर्थः, इति गाथार्थः ॥ कस्य पुनस्तावद्देशचरणं भवतीत्याह—

**देसचरणं गिहीणं मूलुत्तरगुणवियप्पओ दुविहं। मूले पंच अणुव्वय उत्तरगुण दिसिवयाईयं ॥ ११५ ॥**

देशचरणं गृहिणामेव भवति, न यतीनां, तेषां सर्वचारित्र एवाधिकारात्, ननु देशचरणमपि सम्भवद्भेदमेकरूपं वेत्याह-मूलोत्तरगुणविकल्पतो-मूलोत्तरगुणभेदाभ्यां तदपि द्विविधं, तत्र मूले-मूलगुणविषये चिन्त्यमाने पञ्चाणुव्रतानि ज्ञातव्यानि, तत्रा-

णूनि-महाव्रतापेक्षया लघूनि व्रतान्यणुव्रतानि, अणोः-सर्वगुणापेक्षया यतिभ्यो लघोर्वा-श्रावकस्य व्रतान्यणुव्रतानि, अथवा देशनाकाले महाव्रतप्ररूपणा ततोऽनु-पश्चात् प्ररूपणीयानि व्रतान्यनुव्रतानि, तत्प्रथमतया हि धर्मं शुश्रूषोः प्रथमं महाव्रतानि प्ररूपणीयानि, ततस्तत्प्रतिपत्त्यसमर्थस्य पश्चादनुव्रतानि, यदाह-" जइधम्मस्सऽसमत्थे जुज्जइ तद्देसणंपि साहूण " मिति, पञ्च च तान्यनुव्रतानि च पञ्चाणुव्रतानि-स्थूलप्राणातिपातविरमणादीनि, तत्रान्यतीर्थिकैरपि प्रायः प्राणित्वेन प्रतीयमानत्वात् स्थूला द्वित्रिचतुःपञ्चेन्द्रियास्ते च ते उच्छ्वासादिप्राणयोगात् प्राणाश्च स्थूलप्राणाः, भवति च तद्योगात्तद्व्यपदेशो यथा दण्डयोगाद्दण्डः पुरुष इति, तेषामतिपातो-वधो हिंसेतियावत् तद्विरमणं-सङ्कल्पमाश्रित्य प्रत्याख्यानं प्रथममणुव्रतं, प्रत्याख्यानं चावश्यचूर्ण्यामेवमुक्तम्-" थूलगं पाणाइवायं संकप्पओ पच्चक्खामि जावज्जीवाए दुविहंतिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि' । संकल्पतो वधाभिसन्धिमाश्रित्य, नारम्भतोऽपि, गृहिणामारम्भवर्जनासम्भवात्, एतच्च व्रतं प्रतिपन्नेन पंचातिचाराः कदाचिदपि नासेवनीयाः, ते चामी-बन्धो वधः छविच्छेदोऽतिभाराधिरोपणं भक्तपानव्यवच्छेदश्चेति, तत्र बन्धो मनुष्यगवादीनां रज्जुदामनकादिभिः संयमनं, अयं च द्विविधः सम्भवति-अर्थाय अनर्थाय चेति, तत्रानर्थाय तावन्न कदाचिद्विवेकिनाऽसौ समाचरणीयो, यश्चार्थाय सोऽपि द्विविधः- सापेक्षो निरपेक्षश्च, तत्र यदा चतुष्पदचौरादिकं प्रदीपनकमरणाद्यपेक्षां मुक्त्वा निर्दयं निश्चलमत्यर्थमाक्रम्य बध्यते तदा निरपेक्षो, यदा तु चतुष्पदादि तावत्तथा बध्नाति यथा प्रदीपनकादिषु तद्बन्धनस्य मोचनं छेदनादिकं च कर्तुं शक्यते, द्विपदेषु तु दासं दासीं चौरं वा पाठादिप्रमत्तं पुत्रादिकं वा तन्मरणादिभीरुतया सदयं तथा बध्नाति यथा बद्धानामपि तेषामंगानि सप्रवीचाराणि भवन्ति, प्रदीपनका-

दिषु च विनाशो न सम्पद्यते, तदाऽसौ सापेक्षः, इह चायं मुनीन्द्रोपदेशो-यच्छ्रावकेण त एव गवादयः परिग्रहीतव्या ये अबद्धा अप्येवमेवासते, भीतपर्षदा च तथा तेन भाव्यं यथा बन्धादिमन्तरेणापि दृष्टिदर्शनादिमात्रत एव भीतो दासादिः सम्यक् प्रवर्त्तते, अथ कोऽपि न यदा प्रवर्त्तते तदा यथोक्तस्वरूपं सापेक्षं बन्धमपि कुर्वन्न व्रतमतिचरति, निरपेक्षे त्वस्मिन् विधीयमाने व्रतातिचार इति १। वधो-यष्टिकपादिभिः ताडनं, अर्थानर्थादिका तु भावना अत्रापि बन्धवत् कार्या, नवरं निरपेक्षो वधो निर्दयताडना, भीतपर्षदोऽपि च यदि तस्य कश्चिन्न बिभेत्यतोऽसंगतं किंचिदाचरति तदा मर्माणि मुक्त्वा सदयस्य तं लतया दवरकेण सकृद् द्विर्वा ताडयतोऽपि सापेक्षो वधः२। छविः-त्वक् तद्योगाच्छरीरमपि छविस्तस्य छेदं असिपुत्रिकादिभिः पाटनं छविच्छेदः, अत्रापि भावना निगदितानुसारत एव कार्या, नवरं करचरणकर्णनासागलपुच्छाद्यवयवान्निर्दयं छिन्दानस्यासौ निरपेक्षः, अरुर्गण्डं मांसांकुरादिकं रागाद्यदूषितमतेः सदयं छिन्दतः सापेक्षं ३। भरणं भारोऽतीवभारोऽतिभारः प्रभूतधान्यपूगफलादेर्गन्त्रिगोपृष्ठादावारोपणमतिभारारोपणं, इह चैवं पूर्वमुनिनिगदिता यतना-या द्विपदचतुष्पदवाहनेन जीविका सा श्रावकेण दूरत एव परित्याज्या, अथ कथमप्यन्यथाऽसौ न भवेत् तदा द्विपदस्तावद्यावन्तं भारं स्वयमुत्क्षिपत्यवतारयति च तावन्तमेव वाह्यते, चतुष्पदस्तु यावन्तं भारं वोढुं क्षमते ततोऽसौ कियताऽप्यूनः क्रियते, हलशकटादिषु पुनरुचितवेलायां असौ मुच्यते४। भक्तपानयोः-भोजनोदकयोर्व्यवच्छेदो-निवारणं भक्तपानव्यवच्छेदः, अर्थानर्थादिचिन्ता अत्रापि तथैव कार्या, नवरं सापेक्षो रोगचिकित्सार्थमसौ सम्भवति, अपराधकारिणि च वाचैव ब्रूयात्, यथा न दास्ये तव भोजनादि, शान्तिनिमित्तं चोपवासं कारयेत्, किं बहुना ?, यथा मूलगुणस्य प्राणातिपातविरमणस्य मालिन्यं न भवति तथा यतितव्यमिति५। अत्राह कश्चित्-ननु प्राणिनामतिपात एवानेन प्रत्याख्यातो, न

बन्धादयः, ततस्तत्करणेऽपि कोऽस्य दोषो, यथागृहीतविरतेरखण्डितत्वाद्; अथ बन्धादयोऽपि प्रत्याख्यातास्तेन तर्हि तत्करणे व्रतभंग एव, विरतेः खण्डितत्वात्, कुतोऽतीचारत्वं ?, किंच- बन्धादीनामपि प्रत्याख्येयत्वेऽगीक्रियमाणे प्रस्तुतव्रतेयत्ता विशीर्येत, बन्धादीनामपि पृथग्व्रतत्वादिति, अत्रोच्यते, मुख्यतया प्राणातिपात एव तेन प्रत्याख्यातो, न बन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता एव द्रष्टव्याः, प्राणातिपातनिबन्धनभूतत्वात्तेषां, यदि तेऽपि प्रत्याख्यातास्तर्हि भवतु तत्करणे व्रतभंगो नातिचार इति चेन्नैवं, द्विविधं हि व्रतं-अन्तर्वृत्त्या बहिर्वृत्त्या च, तत्र मारयामीति विकल्पशून्योऽपि यदा कोपाद्यावेशात् परप्राणप्रहाणनिरपेक्षो बन्धादौ प्रवर्त्तते न च स्वायुर्बलीयस्त्वादिकारणात्तस्य बन्धादिविषयीकृतस्य जन्तोर्मृत्युः सम्पन्नस्तदा दयापरिणतिवर्जिततया विरत्यनपेक्षप्रवृत्त्या भग्नमन्तर्वृत्त्या व्रतं, प्राणिघाताभावात्तु बहिर्वृत्त्या पालितं, ततो देशस्य भंजनाद्देशस्य तु पालनादतिचारव्यपदेशः प्रवर्त्तते, तदुक्तं— "न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः ।" इत्याशंक्य उत्तरमाह— 'निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः । देशस्य भंगादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ २ ॥' यच्चोक्तं-'व्रतेयत्ता विशीर्येत' इत्यादि, तदप्ययुक्तं, विशुद्धहिंसादिविरतिसद्भावे हि बन्धादीनामभाव एवेति, तस्माद्बन्धादयोऽतिचारा एव, न पृथग्व्रतानि, बन्धादिग्रहणस्य चोपलक्षणत्वादपरेऽपि हिंस्रमन्त्रादयोऽतिचारतयाऽत्र द्रष्टव्याः ॥ उक्तं सातिचारं प्रथममणुव्रतम्, अथ स्थूलमृषावादविरमणलक्षणं द्वितीयं तदुच्यते, तत्र स्थूलः—परिस्थूरद्विपदादिवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवः स चासौ मृषावादश्च-अनृताभिधानरूपः स्थूलमृषावादस्तस्य विरमणं, न तु सूक्ष्मस्य, तस्य महाव्रतविषयत्वात्, स च कन्यागोभूम्यलीकन्यासापहार-

भिलापश्चेति; अमीषां चायं विषयविभागः, 'परदारवज्जिणो पंच हुंति तिण्णि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच उ भंगविगप्पेहिं नायव्वं ॥१॥' तथाहि-इत्वरं-स्वल्पकालं परिगृहीता-स्वीकृता या केनचित् काचिद् वेश्या तस्यां गमनं परदारवर्जकस्यातिचारः, तस्यास्तावन्तं कालमर्थप्रदानतः परेण परिगृहीतत्वात् परदारत्वाद्, वेश्यामेव एतां याम्यहं न परकलत्रमिति स्वकल्पनामात्रतस्तु अपरदारत्वात्, वेश्यारूपत्वादिति भावः१।अपरिगृहीता-अनाथा कुलांगना तस्यामपि गमनं तस्यातिचारः,लोके तस्याः परदारत्वेन रूढत्वात्, कामुककल्पनया तु स्वभर्त्रादेरभावतोऽपरदारत्वादिति भावः, एतौ च द्वावपि स्वदारसन्तोषिणोऽतिचारतया न सम्भवतः, स्वदारव्यतिरेकिण्याः सर्वस्या अपि स्त्रियस्तेन प्रत्याख्यातत्वात्, तद्गमने व्रतभंगस्यैव प्राप्तेरिति भावः२।अनंगः-कामस्तत्प्रधाना क्रीडा अधरदशनालिंगनाकुचमर्दनादिकानि, चुंबनमेव व्रतविषयो नैषा इतिभावनया परदारेष्वेतां कुर्वतः परदारवर्जकस्यातिचारः, एवं स्वदारसंतोषिणोऽपि परदारादिष्वेवं कुर्वतोऽतिचारता वाच्या, योषितस्त्वनयैव भावनया पुरुषे आलिंगनादि कुर्वत्या अतिचारता३। परेषां-स्वकीयारिक्तानामपत्यानां कन्याफललिप्सया स्नेहसम्बन्धादिना वा विवाहस्य विधानं परविवाहकरणं, इदं च परदारवर्जकस्वदारसंतुष्टयोर्योषितश्च त्रयाणामप्यतिचारः सम्भवति,यदा हि परदारादिषु मैथुनं न कुर्मो न कारयाम इत्यभिग्रहः स्यात् तदा परविवाहकरणेऽर्थतो मैथुनस्य तेषु कारणमनुष्ठितं भवति अतो भंगः, विवाह एवायं मया विधीयते न परदारादिषु मैथुनमिति भावनया तु व्रतसापेक्षत्वादभंग इत्यतिचारता ४। कामे-कामोदयजन्ये मैथुने, अथवा 'सूचनात् सूत्र'मिति कामभोगेषु, तत्र समयपरिभाषया कामौ शब्दरूपे भोगा-गन्धरसस्पर्शास्तेषु, तीव्राभिलाषः-अत्यन्तं तदध्यवसायः,अयमपि त्रयाणामपि पूर्वोक्तानामतिचारतया युज्यत एव, यद्यपि हि स्वदारादिषु तीव्रोऽपि कामाभिलापस्तेषां साक्षादप्रत्याख्यातत्वात् मुत्कल एवेति कुतस्तत्-

राज्यं-कटकं देशो वा विरुद्धराज्यं तत्र निजस्वामिनो निषेधवचनमभिलंघ्य क्रमणं-गमनं विरुद्धराज्यातिक्रमः, अयं च यद्यपि स्वस्वामिना अनुज्ञातस्य परकटकादिप्रवेशस्य 'सामीजीवादत्तं तित्थयरेणं तहेव य गुरूहिं । एयस्स उ जा विरई अदिन्नदाणस्स सा विरई ॥ १ ॥' इत्यदत्तादानलक्षणयोगाद् विरुद्धराज्यातिक्रमकारिणां चौर्यदण्डयोग्यतावाप्तेश्चादत्तादानरूपत्वाद्भंग एव, तथापि वाणिज्यमेवेदं मया कृतं, न चौर्यमिति भावनया व्रतनिरपेक्षत्वाभावाल्लोके चौरोऽयमिति व्यपदेशाभावाच्च अतीचारता ३। कूटतुलाकूटमानयोः-व्यवस्थापेक्षया न्यूनाधिकयोः करणं कूटतुलाकूटमानकरणं ४, तेन-प्रस्तुतेन कुंकुमादिना प्रतिरूपं-सदृशं कुसुम्भादि प्रक्षिप्यते यत्र व्यवहारे स तत्प्रतिरूपो व्यवहारः, अथवा तत्प्रतिरूपेण-सहजकर्पूरादिसदृशेन कृत्रिमकर्पूरादिना यो व्यवहारः स तत्प्रतिरूपव्यवहारः, एतौ च कूटतुलाकूटमानतत्प्रतिरूपव्यवहारौ यद्यपि वंचनापरिणामेन परधनग्रहणरूपतया व्रतभंगरूपौ तथापि क्षत्रखननादिकमेव चौर्यं इदं तु वणिक्कलोपजीवनमेवेति स्वकल्पनामात्रमपेक्ष्यातिचारतयोक्ताविति ५। उक्तं सातिचारं तृतीयाणुव्रतम्, अथ परदारविरमणस्वदारसन्तोषलक्षणं चतुर्थमणुव्रतमुच्यते, तत्र परे-आत्मव्यतिरिक्ताः पुरुषाः तथा मनुष्यजात्यपेक्षया देवास्तिर्यंचश्च तेषां दाराः- परिणीतसंगृहीतभेदानि नारीरूपाणि कलत्राणि देव्यः तिरश्च्यश्चेति परदारास्तेषां विरमणं-वर्जनं, यद्यप्यपरिगृहीतदेव्यस्तिरश्च्यश्च काश्चित् संगृहीतुः परिणेतुश्च कस्यचिदभावाद्वेश्याकल्पा एव भवन्ति तथापि प्रायः परजातीयभोग्यत्वात् परदारा एव ता इति वर्जनीयाः, तथा स्वदारैः सन्तोषः स्वदारसन्तोषः, यथा परकलत्रं तथा वेश्यामपि वर्जयित्वा स्वदारैरेव कश्चित् सन्तुष्यतीत्यर्थः, उपलक्षणत्वाद्योषितां स्वभर्तृव्यतिरिक्तस्य सामान्यतः पुरुषमात्रस्य वर्जनमित्यपि द्रष्टव्यं, अत्रापि पंचातिचारा वर्जनीयाः, तद्यथा—इत्वरपरिगृहीतागमनं अपरिगृहीतागमनं अनंगक्रीडा पर विवाहकरणं कामे तीव्रा-

मंत्रितार्थप्रकाशने जनितलज्जादिभावतः स्वदारादेर्मरणादिसम्भवेन परमार्थतस्तस्यासत्यता, 'सच्चंपि तन्न सच्चं जं परपीडाकरं वयणं' इत्यादिवचनाद्, अतः कथंचिद्भंगात् कथंचिच्चाभंगादतीचारतेति ३ मृषा- अलीकं तस्योपदेशो मृषोपदेशः, इदं एवं चैवं च ब्रूहीत्यादिकमसत्याभिधानशिक्षणमित्यर्थः, इह व्रतसंरक्षणे निर्गतापेक्षत्वादनाभोगादिना परेषां मृषोपदेशं यच्छतोऽतिचारता४। कूटलेखस्य-असद्भूतार्थसूचकाक्षरलेखनस्य करणं, इहापि मृषाभणनमेव मया प्रत्याख्यातं इदं तु लेखनमिति भावनया मुग्धबुद्धे-र्व्रतसव्यपेक्षस्यातिचारता भावनीया, अन्यथा वाऽनाभोगादिकारणेभ्योऽसौ वाच्येति५ ॥ उक्तं सातिचारं द्वितीयमणुव्रतं, अथ स्थूलादत्तादानविरमणलक्षणं तृतीयमुच्यते, तत्र चौर्यारोपणहेतुतया प्रसिद्धं स्थूलं इन्धननीरणधान्यादि, न तु कर्णशोधन-सिलिकादि, तच्च तददत्तं च २ तस्यादानं-ग्रहणं तस्य विरमणं स्थूलादत्तादानविरमणं, इदं च सचेतनाचेतनमिश्रवस्तुविषयत्वात् त्रिधा, अत्रापि पंचातिचारा वर्जनीयास्तद्यथा- स्तेनाहृतं तस्करप्रयोगो विरुद्धराज्यगमनं कूटतुलाकूटमानकरणं तत्प्रतिरूपव्यव-हारश्चेति, तत्र स्तेनाः- चौरास्तैराहृतं-आनीतं कुंकुमादि स्तेनाहृतं, इदं हि लोभदोषात् काणकक्रयेण गृह्णंश्चौरो व्यपदिश्यते, यदाह- 'चौरश्चौरापको मंत्री, भेदकः काणकक्रयी । अन्नदः स्थानदश्चैव, चौरः सप्तविधः स्मृतः ॥ १ ॥" तदित्थं चौर्यकरणाद् व्रतभंगो वाणिज्यमेव मया विधीयते न चौर्यमित्यध्यवसायतो व्रतनिरपेक्षत्वाभावादभंग इत्युभयरूपत्वादतिचारता१। तस्कराः-चौरा एव तेषां प्रयोजनं प्रयोगः, किमिदानीं निर्व्यापारास्तिष्ठथ यूयं, यदि शम्बलादिकं नास्ति भवतां तदा तदहं प्रयच्छामि, युष्मदानीत-मोषस्य वा यदि विक्रायको न कश्चिदस्ति तदाऽहं विक्रेष्यामि गच्छन्तु चौर्यार्थं भवन्त इत्यादिवचनैश्चौराणां स्तेयक्रियायां व्यापारणमित्यर्थः, अत्रापि भंगसापेक्षतानिरपेक्षताभ्यामतिचारता भावनीयेति २। विरुद्धो- निजदेशस्वामिनः प्रतिपन्थी तस्य

कूटसाक्षित्वभेदात् किल पंचविधः, तत्र निर्दोषामपि कन्यां सदोषां व्यत्ययेन वा वदतः कन्यालीकं, इदं चोपलक्षणमात्रं सर्वस्यापि द्विपदविषयस्यालीकस्य, एवं गवालीकमपि भावनीयं, नवरमिदं चतुष्पदविषयस्याप्यलीकस्योपलक्षणं, परसत्कामप्यात्मादिसत्कां भुवं वदतो भूम्यलीकं, इदं च सर्वस्याप्यपदविषयस्याप्यलीकस्योपलक्षणं, यद्येवं कन्यादिविशेषोपादानमुत्सृज्य सामान्येन द्विपद-चतुष्पदापदग्रहणमेव कस्मान्न कृतं ?, तदतिरिक्ताभावेन सर्वसंग्रहासिद्धेः, सत्यं, किन्तु कन्याद्यलीकानां लोकेऽतिगर्हितत्वाद्विशेषेण तद्वर्जनार्थं तदुपादानं, अत एव द्विपदादिविषयालीकतोऽन्यालीकासम्भवेऽपि लोकेऽतिगर्हिततया रूढत्वान्न्यासापहारकूटसाक्षित्वे कन्याऽलीकत्वादिभ्यः पृथगुपात्ते, ननु तथापि न्यासापहारस्यादत्तादानविषयत्वादिहोपादानमसंगतं, सत्यं, किन्त्वपलापवचनस्य मृषावादविषयत्वाददोषः, अत्रापि पंचातिचारा वर्जनीयास्तद्यथा-सहसाऽभ्याख्यानं रहसाऽभ्याख्यानं स्वदारमन्त्रभेदः मृषोपदेशः कूटलेखकरणं चेति, तत्र सहसा-अनालोच्याभ्याख्यानं-असद्दोषाध्यारोपणं, यथा चौरस्त्वं पारदारिको वेत्यादि १। रहसा-एकान्तेन हेतुभूतेनाभ्याख्यानं, इदमुक्तं भवति-रहसि मन्त्रयमाणानभिवीक्ष्य यथैष मंत्रो मया ज्ञातः इदं चेदं च राजविरुद्धादिकमिह मंत्र्यत इति, अत्राह-नन्वभ्याख्यानमसद्दोषाभिधानरूपत्वात् मृषावाद एव, अतस्तदभिधाने व्रतभंग एव, कुतोऽतिचारता?, सत्यं, किन्तु यदाऽपरोपघातकमनाभोगादिनाऽभिधत्ते तदा संक्लेशाभावेन व्रतनिरपेक्षत्वाभावान्न तद्भंगः, परोपघातहेतुरूपत्वात्तु भंग इति भंगाभंगरूपतया अतिचारतेति, यदा तु तीव्रसंक्लेशयुक्तोऽभ्याख्याति तदा व्रतनिरपेक्षत्वाद्भंग एव, आह च-"सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो। जइ पुणऽणाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥" २। स्वदाराणां मंत्रो- विश्रम्भभाषितं तस्य भेदं-अन्यकथनं, दारग्रहणं चेह मित्राद्युपलक्षणं, अयं चानुवादरूपत्वेन सत्यत्वाद् यद्यप्यतिचारो न घटते तथापि

करणेऽप्यतिचारसम्भव इति तथाऽप्यसौ न विधेयो, यतो विदितजिनवचनः श्रावकः श्राविका वा अत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, अतीव्राभिलाषिणोऽपि च यापनायाः सम्भवात् तीव्राभिलाषोऽर्थतः प्रत्याख्यात एवेति तत्करणे व्रतसापेक्षत्वे च भंगाभंगरूपत्वादतिचारता, ननु योषितोऽनंगक्रीडादयः त्रयोऽतिचारा भाविताः, पंचातिचारपक्षस्तु तस्याः कथं भाव्यते ?, उच्यते, यदा स्वकीयपतिः सपत्न्या वारकदिने परिगृहीतो भवति तदा सपत्नीवारकमतिक्रम्य पतिं परिभुंजानाया आद्यातिचारोऽपि सम्भवति, द्वितीयस्त्वतिक्रमाद्यवस्थायां परपुरुषमभिसरन्त्याः ॥ अतिक्रमव्यतिक्रमातिचारानाचारास्तु आधाकर्माश्रित्य शास्त्रान्तरे इत्थं भाविताः, यथा- आधाकर्मनिमन्त्रणमभ्युपगच्छन् साधुरतिक्रमे वर्त्तते तावद्यावत्तद्ग्रहणार्थं पदोत्क्षेपः, तत्प्रभृति पुनर्व्यतिक्रमस्तावद्यावदाधाकर्मग्रहणं, तत्प्रभृति पुनरतीचारस्तावद्यावत्तस्य परिभोगः, तस्मिँस्तु कृतेऽनाचारः, एषणाभंग इत्यर्थः, उक्तंच— 'आहाकम्मनिमंतण १ पडिसुणमाणे अइक्कमो होइ २। पइभेयाइ वइक्कम गहिए ३ गिलिए अणायारो ४ ॥ १ ॥' एवमेतदनुसारतोऽन्यत्राप्याद्यपादत्रयेऽतिचारता भावनीया, अतिक्रमव्यतिक्रमयोरप्यतिचारभेदत्वात्, चतुर्थपदे तु विवक्षितव्रतभंग इत्यलं प्रसंगेन। तदित्थं पंचाप्यतिचारा योषितोऽपि भाविता इति। उक्तं सातिचारं चतुर्थमणुव्रतं, अथ स्थूलपरिग्रहविरमणलक्षणं पंचमं तदुच्यते, तत्र स्थूलः- अपरिमितः स चासौ परिग्रहश्च स्थूलपरिग्रहः, स च क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यद्विपदचतुष्पदकुप्यलक्षणनवविधवस्तुविषयत्वान्नवविधः तस्य स्वकीयावस्थानुरूपं विरमणं पंचममणुव्रतं, अत्रापि पंचातिचारा वर्जनीयास्तद्यथा- क्षेत्रवास्तुप्रमाणातिक्रमो हिरण्यसुवर्णप्रमाणातिक्रमो धनधान्यप्रमाणातिक्रमो द्विपदचतुष्पदप्रमाणातिक्रमः कुप्यप्रमाणातिक्रमश्चेति, उक्तंच- 'खेत्ताइ-

कूटसाक्षित्वभेदात् किल पंचविधः, तत्र निर्दोषामपि कन्यां सदोषां व्यत्ययेन वा वदतः कन्यालीकं, इदं चोपलक्षणमात्रं सर्वस्यापि द्विपदविषयस्यालीकस्य, एवं गवालीकमपि भावनीयं, नवरमिदं चतुष्पदविषयस्याप्यलीकस्योपलक्षणं, परसत्कामप्यात्मादिसत्कां भुवं वदतो भूम्यलीकं, इदं च सर्वस्याप्यपदविषयस्याप्यलीकस्योपलक्षणं, यद्येवं कन्यादिविशेषोपादानमुत्सृज्य सामान्येन द्विपद-चतुष्पदापदग्रहणमेव कस्मान्न कृतं ?, तदतिरिक्ताभावेन सर्वसंग्रहासिद्धेः, सत्यं, किन्तु कन्याद्यलीकानां लोकेऽतिगर्हितत्वाद्विशेषेण तद्वर्जनार्थं तदुपादानं, अत एव द्विपदादिविपयालीकतोऽन्यालीकासम्भवेऽपि लोकेऽतिगर्हिततया रूढत्वान्न्यासापहारकूटसाक्षित्वे कन्याऽलीकत्वादिभ्यः पृथगुपात्ते, ननु तथापि न्यासापहारस्यादत्तादानविषयत्वादिहोपादानमसंगतं, सत्यं, किन्त्वपलापवचनस्य मृषावादविषयत्वाददोषः, अत्रापि पंचातिचारा वर्जनीयास्तद्यथा-सहसाऽभ्याख्यानं रहसाऽभ्याख्यानं स्वदारमन्त्रभेदः मृषोपदेशः कूटलेखकरणं चेति, तत्र सहसा-अनालोच्याभ्याख्यानं-असद्दोषाध्यारोपणं, यथा चौरस्त्वं पारदारिको वेत्यादि १। रहसा-एकान्तेन हेतुभूतेनाभ्याख्यानं, इदमुक्तं भवति-रहसि मन्त्रयमाणानभिवीक्ष्य यथैष मंत्रो मया ज्ञातः इदं चेदं च राजविरुद्धादिकमिह मंत्र्यत इति, अत्राह-नन्वभ्याख्यानमसद्दोषाभिधानरूपत्वात् मृषावाद एव,अतस्तदभिधाने व्रतभंग एव, कुतोऽतिचारता?, सत्यं, किन्तु यदाऽपरोपघातकमनाभोगादिनाऽभिधत्ते तदा संक्लेशाभावेन व्रतनिरपेक्षत्वाभावान्न तद्भंगः, परोपघातहेतुरूपत्वात्तु भंग इति भंगाभंगरूपतया अतिचारतेति, यदा तु तीव्रसंक्लेशयुक्तोऽभ्याख्याति तदा व्रतनिरपेक्षत्वाद्भंग एव, आह च-"सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो। जइ पुणऽणाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥" २। स्वदाराणां मंत्रो- विश्रम्भभाषितं तस्य भेदं-अन्यकथनं, दारग्रहणं चेह मित्राद्युपलक्षणं, अयं चानुवादरूपत्वेन सत्यत्वाद् यद्यप्यतिचारो न घटते तथापि

करणेऽप्यतिचारसम्भव इति तथाऽप्यसौ न विधेयो, यतो विदितजिनवचनः श्रावकः श्राविका वा अत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, अतीव्राभिलाषिणोऽपि च यापनायाः सम्भवात् तीव्राभिलाषोऽर्थतः प्रत्याख्यात एवेति तत्करणे व्रतसापेक्षत्वे च भंगाभंगरूपत्वादतिचारता, ननु योषितोऽनंगक्रीडादयः त्रयोऽतिचारा भाविताः, पंचातिचारपक्षस्तु तस्याः कथं भाव्यते ?, उच्यते, यदा स्वकीयपतिः सपत्न्या वारकदिने परिगृहीतो भवति तदा सपत्नीवारकमतिक्रम्य पतिं परिभुंजानाया आद्यातिचारोऽपि सम्भवति, द्वितीयस्त्वतिक्रमाद्यवस्थायां परपुरुषमभिसरन्त्याः ॥ अतिक्रमव्यतिक्रमातिचारानाचारास्तु आधाकर्माश्रित्य शास्त्रान्तरे इत्थं भाविताः, यथा- आधाकर्मनिमन्त्रणमभ्युपगच्छन् साधुरतिक्रमे वर्त्तते तावद्यावत्तद्ग्रहणार्थं पदोत्क्षेपः, तत्प्रभृति पुनर्व्यतिक्रमस्तावद्यावदाधाकर्मग्रहणं, तत्प्रभृति पुनरतीचारस्तावद्यावत्तस्य परिभोगः, तस्मिँस्तु कृतेऽनाचारः, एषणाभंग इत्यर्थः, उक्तंच— 'आहाकम्मनिमंतण १ पडिसुणमाणे अइक्कमो होइ २ । पइभेयाइ वइक्कम गहिए ३ गिलिए अणायारो ४ ॥ १ ॥' एवमेतदनुसारतोऽन्यत्राप्याद्यपादत्रयेऽतिचारता भावनीया, अतिक्रमव्यतिक्रमयोरप्यतिचारभेदत्वात्, चतुर्थपदे तु विवक्षितव्रतभंग इत्यलं प्रसंगेन । तदित्थं पंचाप्यतिचारा योषितोऽपि भाविता इति। उक्तं सातिचारं चतुर्थमणुव्रतं, अथ स्थूलपरिग्रहविरमणलक्षणं पंचमं तदुच्यते, तत्र स्थूलः-अपरिमितः स चासौ परिग्रहश्च स्थूलपरिग्रहः, स च क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यद्विपदचतुष्पदकुप्यलक्षणनवविधवस्तुविषयत्वान्नवविधः तस्य स्वकीयावस्थानुरूपं विरमणं पंचममणुव्रतं, अत्रापि पंचातिचारा वर्जनीयास्तद्यथा- क्षेत्रवास्तुप्रमाणातिक्रमो हिरण्यसुवर्णप्रमाणातिक्रमो धनधान्यप्रमाणातिक्रमो द्विपदचतुष्पदप्रमाणातिक्रमः कुप्यप्रमाणातिक्रमश्चेति, उक्तंच- 'खेत्ताइ-

हिरण्णाईधणाइदुपयाइकुप्पमाणकमं । जोयणपमाणबंधणकारणभावेहिं नो कुणइ ॥ १ ॥' तत्र क्षेत्रं-सस्योत्पत्तिभूमिः, तच्च सेतुकेतूभयभेदात्त्रिविधं, तत्र सेतुक्षेत्रमरघट्टादिसेक्यं, केतुक्षेत्रं पुनराकाशोदकनिष्पाद्यं, उभयक्षेत्रं तु तदुभयहेतुकमिति, वास्तु-अगारं ग्रामनगरादि च, तत्रागारं त्रिविधं- खातमुच्छ्रितं खातोच्छ्रितं च, तत्र खातं- भूमिगृहादि उच्छ्रितं- भूम्युपर्युच्छ्रयेण कृतं उभयं तु-भूमिगृहस्योपरि प्रासादः, एतयोश्च क्षेत्रवास्तुनोः प्रमाणस्य योजनेन-क्षेत्रान्तरादिमीलनेनातिक्रमः अतिचारो भवति, तथाहि-किलैकमेव क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभंगभयात् प्राक्तनक्षेत्रादिप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्त्याद्यपनयने तत्तत्र योजयतो व्रतसापेक्षत्वात् कथंचित् विरतिविराधनाच्चातिचार इति १ । हिरण्यं-रजतं सुवर्णं-प्रसिद्धं तत्प्रमाणस्य प्रदानेन-वितरणेनातिक्रमोऽतिचारो भवति, यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिपरिमाणं विहितं, ततस्तेन तुष्टराजादेः सकाशात्तदधिकं तत् कथमपि लब्धं, तच्च व्रतभंगभयात् पूर्णे व्रतावधौ ग्रहीष्यामि इति भावनयाऽन्यस्य हस्ते दत्त्वा मुंचतीति व्रतसापेक्षत्वादतिचार इति २। धनं-गणिमधरिममेयपरिच्छेद्यभेदाच्चतुर्विधं, तत्र गणिमं-पूगफलादि धरिमं-गुडादि मेयं-घृतादि परिच्छेद्यं-माणिक्यादि धान्यं-व्रीह्यादि एतत्परिमाणस्य बन्धनतोऽतिक्रमोऽतिचारो भवति, यथा कृतधनादिपरिमाणः कोऽपि पूर्वलभ्यमन्यद्वा धनादिकं कस्यापि पार्श्वे लभते, तच्च व्रतभंगभयाच्चतुर्मास्यादिपरतो गृहगतधान्यादिविक्रयेऽपि कृते गृहीष्यामि इत्येवंभूतबन्धनेन वचननियन्त्रणात्मकेन मूढकादिबन्धरूपेण वा स्वीकृत्य यदा दायकादिगेह एव तद्धरति तदाऽतिचार इति ३ । द्विपदं-पुत्रकलत्रदासीदासकर्मकरशुकसारिकादि, चतुष्पदं गवाश्वादि, तयोर्यत् प्रमाणं तस्य कारणेन गर्भनिधापनेनातिक्रमोऽतिचारो भवति, यथा केनापि किल संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं तेषां च संवत्सरमध्य एव प्रसवेऽधिकद्विप-

दादिभावतो व्रतभंगः स्याद् अतः तद्भयात् कियन्तमपि कालमतिवाह्य गर्भग्रहणं कारयतोऽतिचारः, गर्भगताधिकद्विपदादिभावाद् बहिरनिर्गमनेन तदभावकल्पनाच्च व्रतभंगाभंगप्राप्तेः४। कुप्यं-शयनासनकुन्तखड्गभाजनकच्चोलकादि गृहोपस्काररूपं तत्प्रमाणातिक्रमोऽतिचारो भवति, यथा किल केनापि कच्चोलकदशकलक्षणं कुप्यमानं कृतं, कथंचिच्च तदाधिक्यसम्भवे सति व्रतभंगभयाद् भंजयित्वा बहुभिरपि पर्यायान्तरेण दशैव कारयतः संख्यापूरणात् स्वाभाविकसंख्याबाधनाच्चातिचार इति ५ ॥

तदेवमभिहितानि पंचाणुव्रतानि, एतानि च मूलगुणा उच्यन्ते, श्रावकधर्मतरोर्मूलत्वात्, दिग्व्रतादीनि तु तदुपचयलक्षणगुणनिबन्धनतयैवात्मसत्तां बिभ्रति, ततस्तानि श्रावकधर्मद्रुमस्य शाखाप्रशाखाकल्पान्युत्तरगुणा इत्याख्यायन्ते, उत्तररूपा गुणा उत्तरगुणाः, उपचयहेतव इत्यर्थः, ते चोत्तरगुणा दिग्व्रतादयः सप्त, तत्रोर्ध्वाधस्तिर्यग्गमनपरिमाणकरणलक्षणं तावद्दिग्व्रतमुच्यते, अत्रापि पञ्चातिचारा वर्जनीयास्तद्यथा–ऊर्ध्वदिक्प्रमाणातिक्रमोऽधोदिक्प्रमाणातिक्रमः तिर्यग्दिक्प्रमाणातिक्रमः क्षेत्रवृद्धिः स्मृत्यन्तर्द्धानं चेति, तत्राद्यास्त्रयोऽतिचाराः सुबोधा एव, नवरमूर्ध्वादिदिशां गमनमाश्रित्य प्रमाणस्यातिक्रमोऽतिचारोऽनाभोगादिना अतिक्रमव्यतिक्रमादिना वा प्रवृत्तस्य द्रष्टव्यः, अन्यथा भंग एव स्यादिति भावः, क्षेत्रवृद्धिस्त्वेवं भावनीया- यथा केनचित् सर्वास्वपि दिक्षु प्रत्येकं योजनशतात् परतो गमननियमः कृतः, ततश्च पूर्वस्यां दिशि भाण्डं गृहीत्वा योजनशतं यावद्गतः, ततोऽपि परतो भाण्डं बहुतरं मूल्यमवाप्नोत्यतोऽपरस्यां योजननवतिमेव यास्यामीति चेतसि व्यवस्थाप्य पूर्वस्यां दिशि दश योजनानि क्षेत्रवृद्धिं कृत्वा दशोत्तरं योजनशतं गच्छतस्तस्य व्रतसापेक्षत्वात् क्षेत्रवृद्धिलक्षणोऽतिचारः४। स्मृतेः-स्मरणस्यान्तर्द्धानं, यथा केनापि पूर्वस्यां दिशि योजनशतं प्रमाणं कृतं, गमनकाले च स्पष्टतया तत् प्रमादतो न स्मरति–किं शतं पंचाशद्वेति, तेन चैवमुभयां-

शावलम्बिनि संशये पंचाशतमेव यावद् गन्तव्यं, तत्परतोऽपि गच्छतोऽतिचारः, शतादपि परेण गच्छतस्तु भंग इति ॥

उक्तं दिग्व्रतमिदानीमुपभोगपरिभोगव्रतमुच्यते, इदं च द्विधा-भोजनतः कर्म्मतश्च, तत्र 'उप' इति सकृदन्तर्वा भुज्यत इति उपभोगः-अन्नपानादिः, परीति-पुनः पुनः बहिर्वा भुज्यत इति परिभोगः-हिरण्यवस्त्रादिः (ग्र० ६०००)। आह-ननु यद्यन्नहिरण्यादयः उपभोगपरिभोगशब्दवाच्यास्तर्हि कर्मत इदं व्रतं नोपपद्यते, कर्मशब्दस्य क्रियावचनत्वेन युष्माकमिहाभिप्रेतत्वात्, कर्मणश्चोपभुज्यमानत्वपरिभुज्यमानत्वयोरसम्भवात्, सत्यं, किन्तु कर्मणो-वाणिज्यादेरुपभोगपरिभोगकारणत्वात् कारणे च कार्योपचारात् कर्मणोऽत्रोपभोगपरिभागवाच्यता विवक्षितेत्यलं चर्चया, उपभोगपरिभोगयोर्व्रतं-नियतपरिमाणादिकरणमुपभोगपरिभोगव्रतं, तत्र भोजनतस्तावत् श्रावकेण प्रासुकैषणीयभोजिना भवितव्यं, तदभावे अनेषणीयमप्यचित्तं, तदसत्त्वे तु बहुसावद्यमशनादिकं परिहरति, तत्राशने तावत्-'सव्वा य कंदजाई सूरणकंदो य वज्जकंदो य। अल्लहलिद्दा य तहा अल्लं तह अल्लकच्चूरो ॥ १ ॥ सत्तावरी विराली कुमारि तह थोहरी गलोई य। ल्हसणं वंसकरिल्ला गज्जर तह लोणओ लोढा ॥ २ ॥ गिरिकण्णि किसलपत्ता कसेरुया थेग अल्लमोथा य। तह लोणरुक्खछल्ली खेल्लूडो अमयवल्ली य ॥ ३ ॥ मूला तह भूमिरुहा विरुहाइं टक्कवत्थुलो पढमो। सूयरवल्लो य तहा पल्लंको कोमलंबिलिया ॥ ४ ॥ आलुय तह पिण्डालू असमभंगमहीरगाइलक्खणओ। जाणिज्जऽणंतकायं अण्णंपि जिणेहिं निद्दिट्ठं ॥ ५ ॥' इति समयोक्ताननन्तकायान् बहुबीजानि मांसादिकं च वर्जयेत्, पाने मांसरसमित्यादि, खादिमे वटपिप्पलोदुम्बरपिलक्खकोदुम्बरफलानि समये पंचोदुम्बरीत्याख्यया प्रसिद्धानि नियमयति, स्वादिमे तु मध्वादि, शेषेऽप्यल्पसावद्यओदनादावचित्तभोजित्वादिकं परिमाणनैयत्यं विधेयं, अत्यन्तचेतोगृद्ध्युत्पादापवादादिजनकं

वस्त्रवाहनालंकारादिकं वर्जयेत्, शेषेऽपि माननियतता कार्येति, कर्मतोऽपि श्राद्धेन तावत् कर्म्म न किंचित् कर्त्तव्यं, निरारम्भतयैव
स्थातव्यं, अथैवं न निर्वहति तदा निस्त्रिंशजनोचितानि बहुसावद्यानि कोट्टपालगुप्तिपालादिकर्मलक्षणानि खरकर्माणि हलमुशलो-
दूखलशस्त्रलोहविक्रयादिलक्षणानि बहुसावद्यानि कर्माणि वर्जयित्वा अल्पसावद्यमेव कर्म विदधाति, अत्रापि भोजनतः
पंचातिचारा वर्जनीयाः, तद्यथा- सचित्ताहारे सचित्तपडिबद्धाहारे अप्पउलिओसहिभक्खणया दुप्पउलिओसहिभक्खणया
तुच्छोसहिभक्खणाया ' एते च प्रत्याख्यातसचित्तस्याचित्तभोजिनोऽतिचारा द्रष्टव्याः, अस्य चानाभोगातिक्रमादिना कन्दादि-
सचित्तस्याहारोऽतिचारः१। तथा सचित्ते-आम्रगोल्लिकादौ प्रतिबद्धं, पक्वत्वगादीति गम्यते,मुखे प्रक्षिप्य पक्वत्वगाद्येवाचित्तं भक्ष-
यिष्यामि सचित्तं त्वस्थिकं त्यक्षामीतिबुद्ध्या सचित्तप्रतिबद्धस्याहारोऽतिचारः, व्रतसापेक्षत्वात्२। तथा अपक्वायाः-अग्न्यसंस्कृताया
औषधेः- गोधूमादिधान्यरूपाया भक्षणमेव भक्षणता अतिचारः, इदमुक्तं भवति- पिष्टत्वादचेनतमिदमिति सम्भावनायाः सम्भवात्
सचित्तावयवं वह्न्यसंस्कृतं कणिक्कादिकं भक्षयतोऽतिचारः३। तथा दुष्पक्वाया-वह्निना (अल्पा)ऽसंस्कृतस्वरूपत्वेन सम्भवत्सचि-
त्तावयवाया औषधेः पृथुकादिरूपाया भक्षणता अतिचारः ४। तुच्छा-तथाविधतृप्त्यजनकत्वेन असारा औषधयः-कोमलमुद्गादिफल-
रूपास्तद्भक्षणता अतिचारः, आह-ननु यद्येताः सचेतनास्तर्हि तद्भक्षणं प्रथमातिचारान्न विशिष्यते, अथाचित्तास्तर्हि अतिचार
एव न सम्भवति, सत्यं, किन्तु योऽत्यन्तसावद्यभीरुतया सचित्तं प्रत्याख्याति तस्य अचेतना अप्येता भक्षयतः तथाविधतृप्त्य-
सम्पादकत्वात् लौल्यमेवावशिष्यते, अतोऽचेतनीकृत्याप्येता न भक्षणीयाः, तद्भक्षणे तु वस्तुतो व्रतविराधनादतिचारः५। एवं रात्रि-
भोजनमांसादिव्रतेषु वस्त्रादिपरिभोगव्रतेषु वाऽनाभोगातिक्रमादिना अतिचारः स्वयमभ्युह्यः, उपलक्षणमात्रत्वादमीषामिति, कर्म-

तस्तु पंचदशातिचारा वर्जनीयाः,ते चांगारादिकर्मादानानि,तत्रांगारकर्म यत्रांगारान् कृत्वा विक्रीणीते १, वनकर्म यत्र समुदितं वनं क्रीत्वा ततश्छित्त्वा विक्रीय च तल्लाभेन च जीवति२, शकटीकर्म यत्र शाकटिकत्त्वेन निर्वहति३भाटीकर्म यत्र गन्त्र्यादिना परकीयभाण्डं वहति अन्येषां वा भाटकेन शकटबलीवर्दानर्पयति४स्फोटीकर्म्म ओंडत्वं यद्वा हलेन भूमेः स्फोटनं५दन्तवाणिज्यं यत्र प्रथमत एव पुलीन्द्राणां दन्तानयननिमित्तं मूल्यं ददाति, ततस्ते गत्वा तदर्थं हस्तिनो घ्नन्ति, एवं शंखचर्म्मादिमूल्यदानमपीह वाच्यं ६ लाक्षावाणिज्यं प्रतीतं ७ रसवाणिज्यं-मदिरादीविक्रयः ८ केशवाणिज्यं यत्र दास्यादिजीवान् गृहीत्वाऽन्यत्र विक्रीणीते ९ विषवाणिज्यं प्रसिद्धं १० यंत्रपीलनकर्म्म तिलेक्षुयन्त्रादिना तिलादिपीडनं ११ निर्लाञ्छनकर्म बलीवर्द्दतुरगादीनां वर्द्धितककरणं १२ दवाग्निदानं सुज्ञेयं, तच्च किल भूमिषु तरुणतृणरोहणार्थं केचित् कुर्वन्ति १३ सरोह्रदतडागादिशोषणमपि, तत्र धान्यादिवपनार्थं प्रसिद्धमेव १४ असतीपोषणं च यत् केचिद्दासीः पोषयन्ति तत्सम्बन्धिनीं भाटीं गृह्णन्ति यथा गोल्लविषय इति १५, एतानि पंचदश कर्मादानानि षड्विधजीवघातादिमहासावद्यहेतुत्वाद्वर्जनीयानि, उपलक्षणमात्रमेतानि, अन्यान्यप्येवंजातीयकानि बहुसावद्यानि कर्माणि परिहार्याण्येव, आह-नन्वंगारकर्मादयः खरकर्मस्वरूपा एव, ततश्च येन खरकर्म प्रत्याख्यातं तेनैते प्रत्याख्याता एवेति प्रवर्त्तमानस्य भंग एव स्यात् कथमतिचारता ?, सत्यमिदं, यत आकुट्ट्यादिना प्रवर्त्तमानस्य भंग एव, अनाभोगातिक्रमादिना तु तत्करणेऽतिचारताऽवगन्तव्येति ।

उक्तमुपभोगपरिभोगव्रतं, इदानीं अनर्थदण्डविरमणमुच्यते, तत्रार्थः-प्रयोजनं तदभावोऽनर्थः, दण्ड्यते स्वात्मा अनेनेति दण्डः-पापबन्धादिरूपो निग्रहः,अनर्थेन-प्रयोजनाभावरूपेण निजजीवस्य दण्डोऽनर्थदण्डः,स पुनश्चतुर्विधस्तद्यथा-अपध्यानं प्रमादा-

चरितं हिंस्रप्रदानं पापकर्मोपदेश इति, तत्रापध्यानं-'कइया वच्चइ सत्थो? किं भंडं? कत्थ? केत्तिया भूमी?। को कयविक्कयकालो? निव्विसइ किं कहिं केण ? ॥ १ ॥' इत्यादि निष्प्रयोजनासमञ्जसचिन्तारूपं १ प्रमादो-मद्यविषयकषायनिन्द्राविकथालक्षणस्तेन तस्य वा आचरितं-अनुष्ठानं प्रमादाचरितं, अथवा आलस्योपहतचेष्टितं प्रमादाचरितमुच्यते, तच्च बहुजीवोपघातहेतुभूतं अस्थगिततैलभाजनधारणादि २ हिंसनशीलं हिंस्रं-शस्त्रानलोदूखलविषादि तस्य प्रदानं-अन्यस्मै समर्पणं हिंस्रप्रदानं ३ पापकर्म-पापक्रियारूपं तस्योपदेशः पापकर्मोपदेश इति चतुर्विधोऽनर्थदण्डः, तस्माद्विरमणमनर्थदण्डविरमणं, अत्रापि पंचातिचारा वर्जनीयाः, तद्यथा-कन्दर्पः कौत्कुच्यं मौखर्यं संयुक्ताधिकरणता उपभोगपरिभोगातिरेक इति, तत्र कन्दर्पः कामस्तदुद्दीपको हास्यप्रधानस्तथाविधवाक्प्रयोगोऽपि तद्धेतुत्वात् कन्दर्पः१। परेषां हासजनकं बहुविधनेत्रसंकोचादिविक्रियागर्भं भाण्डानामिव चेष्टितं कुत्कुच्यं, एतौ द्वाप्यतिचारौ प्रमादाचरितस्य द्रष्टव्यौ, तद्रूपत्वादिति२। मुखमस्यास्तीति मुखरो-वाचालस्तस्य कर्म्म मौखर्यं-धार्ष्ट्यप्रायमसत्यासम्बद्धप्रलापित्वं, अयं च पापकर्मोपदेशस्य अतिचारो, मौखर्येऽतिपापकर्मोपदेशसंभवात् ३, अधिक्रियते नरकादिष्वात्माऽनेनेत्यधिकरणं-तूणीरधनुर्मुशलोदूखलघरट्टादि संयुक्तं-अर्थक्रियाकरणयोग्यं प्रागुणीकृतं तच्च तदधिकरणं च संयुक्ताधिकरणं तद्भावः संयुक्ताधिकरणता, इह विवेकिना संयुक्तशकटाद्यधिकरणीयं न धरणीयं, प्रगुणं हि तद् दृष्ट्वाऽन्योऽपि याचत इति, अयं हिंस्रप्रदानस्यातिचारः४, उपभोगपरिभोगयोरतिरेकः—आधिक्यमुपभोगपरिभोगातिरेकः, इह किल स्वोपयोगिभ्योऽधिकानि ताम्बूलमोदकमंडकादीन्युपभोगांगानि तडागादिषु न नेतव्यानि, अन्यथा हि खिड्गादयस्तानि भुंजते, ततश्चात्मनो निरर्थकः कर्मबन्धादिदोषः, अयमपि विषयात्मकत्वात् प्रमादाचरितस्यातिचारः, अपध्यानव्रते त्वनाभोगादिना प्रवृत्तिरतिचारः,आकुट्ट्या तु प्रवृत्तौ भंग

एव, कन्दर्प्पादिष्वपि यथासम्भवमाकुट्या प्रवृत्तिर्भंगरूपैव वाच्येति ॥ उक्तमनर्थदण्डविरमणव्रतं, एतानि च त्रीण्यपि दिग्व्रतादीनि गुणव्रतानि उच्यन्ते, अणुव्रतानां गुणाय-उपकाराय व्रतानि गुणव्रतानीतिकृत्वा, भवति ह्यणुव्रतानां गुणव्रतेभ्य उपकारो, विवक्षितक्षेत्रादिभ्योऽन्यत्र हिंसादिनिषेधादिति ।

तदेवमभिहिता गुणव्रतलक्षणास्त्रयः उत्तरगुणाः,अथोत्तरगुणचतुष्टयरूपाणि शिक्षाव्रतान्युच्यन्ते,तत्र शिक्षा-अभ्यासस्तत्प्रधानानि व्रतानि शिक्षाव्रतानि, पुनः पुनरासेवार्हाणीत्यर्थः, तानि च सामायिकादीनि चत्वारि, तत्र समस्य-रागद्वेषविरहितस्य जीवस्यायो-लाभः समायः, समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचारित्रपर्यायैरधःकृतचिन्तामणिकल्पद्रुमादिप्रभावैर्निरुपमसुखहेतुभिर्युज्यते, समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं, सावद्यपरित्यागनिरवद्यासेवनरूपो व्रतविशेष इत्यर्थः, इदं च सर्वारम्भप्रवृत्तेन गृहिणा गृहवासमहानीरधिनिरन्तरोच्छलितातुच्छप्रचुरवीचीनिचयावर्तजनिताकुलत्वविच्छेददक्षं अतिप्रचण्डमोहनरपतिबलतिरस्करणमहायोधकल्पं प्रतिदिवसमंतराऽन्तरा यत्नेन कर्त्तव्यं, परममुनिभिः यत उक्तम्-- 'सावज्जजोगपरिवज्जणट्ठा, सामाइयं केवलियं पसत्थं । गिहत्थधम्मा परमंति नच्चा, कुज्जा अहो आयहियं परत्था ॥१॥ सामाइयम्मि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ २ ॥ अस्यापि पंचातिचारा वर्जनीयाः, तत्र मनोवाक्कायदुष्प्रणिधानलक्षणास्त्रयः, मनःप्रभृतीनां च दुष्प्रणिधानं-अनाभोगादिना सावद्यचिन्तादिषु प्रवर्त्तनं, तथा स्मृत्यकरणं, सामायिकस्यानवस्थितस्य करणं च, तत्र स्मृतेरकरणं प्रबलप्रमादान्नैवं स्मरति यदुत अस्यां वेलायां सामायिकं कर्त्तव्यं, कृतं न कृतं चेति, स्मृतिमूलं च मोक्षानुष्ठानमिति, यस्तु करणानन्तरमेव त्यजति यथाकथंचिद्वाऽनादृतस्तत् करोति तस्यानवस्थितसामायिककरणमुच्यते,

उक्तंच-"सामइयं काऊणं घरचिंतं कुणइ जंपइ जहिच्छं। अनियंतिओ य देहेण निप्फलं तस्स सामइयं॥१॥" इत्यादि ॥अथ देशावकाशिकलक्षणं द्वितीयं शिक्षाव्रतमुच्यते, तत्र दिग्व्रते गृहीतेयत्तस्य सविस्तरदिक्प्रमाणस्य देशे-संक्षिप्तविभागेऽवकाशः अवस्थानं देशावकाशस्तेन निर्वृत्तं देशावकाशिकं,बहुतरपरिमाणसंकोचकमिति भावः,अत्रापि पंचातिचारा वर्जनीयाः,तद्यथा-आनयनप्रयोगः प्रेष्यप्रयोगः शब्दानुपातो रूपानुपातो बहिःपुद्गलप्रक्षेप इति, इदमत्र तात्पर्यं-साधूपाश्रयादौ नियतदेशे वर्तमानः कृतसंक्षिप्ततरदिक्परिमाणो यदा स्वकीयव्रतभंगभयात् अगच्छन् अपरस्य पार्श्वात् संदेशकादिना विवक्षितवस्तुन आनयनप्रयोगं करोति, तथा प्रेष्यस्य-आदेश्यस्य केनापि प्रयोजनेन विवक्षितक्षेत्राद्बहिः प्रयोगं-व्यापारणं करोति, तथा विवक्षितक्षेत्राद्बहिः स्थितं कंचन दृष्ट्वा व्रतभंगभयात् साक्षात्तमाह्वातुमशक्नुवन् व्याजेन तस्याकारणार्थं स्वकीयशब्दस्य-कासितादेः रूपस्य च- निजाकारस्यानुपातं-पातनं करोति, तथा विवक्षितजनस्याकारणार्थमेव नियमविषयीकृतक्षेत्राद्बहिः पुद्गलस्य-लेष्ट्वादेः प्रक्षेपं करोति तदा देशावकाशिकव्रतमतिचरति,इदं हि मा भूद्गमनागमने जीवघातादिसमारम्भ इत्यभिप्रायेण क्रियते,स च स्वयं कृतोऽन्येन वा कारित इति न कश्चित्तत्त्वतो विशेषः, प्रत्युत स्वयंगमने गुणः, ईर्यापथादिविशुद्धेः, परस्य त्वनिपुणत्वात् कुतस्तच्छुद्धिरिति, इदं तावद्दिक्परिमाणस्यैव संक्षेपकरणं दर्शितं, तच्चोपलक्षणमात्रं, शेषाणामपि स्थूलप्राणातिपातादिव्रतानां संक्षेपोऽत्रैव द्रष्टव्यः, अन्यथा तत्संक्षेपस्य दिनमासादिष्ववश्यं कर्तव्यत्वाद् व्रताधिक्यप्राप्तेर्द्वादशव्रतसंख्या विशीर्येतेति। अथ पौषधलक्षणं तृतीयं शिक्षाव्रतमुच्यते, तत्र पोषं-पुष्टिं प्रक्रमाद्धर्मस्य धत्ते-करोतीति पौषधः- अष्टमीचतुर्दशीपौर्णमास्यमावास्यापर्वदिनानुष्ठेयो व्रतविशेषः, अयं चाहारशरीरसत्कारब्रह्मचर्याव्यापारपौषधभेदाच्चतुर्विधः, पुनरपि प्रत्येकं द्विधा-देशतः सर्वतश्च, अस्मिन्नंगीकृते आहारशरीरसत्कारयोर्दे-

शतः सर्वतो वा परिहारः कर्त्तव्यो, ब्रह्मचर्याव्यापारयोस्तु देशतः सर्वतो वा आसेवनं विधेयमिति, अस्यापि पंचातिचारा वर्जनीयास्तद्यथा-अप्रत्युपेक्षितदुष्प्रत्युप्रेक्षितोच्चारप्रश्रवणभूमी अप्रमार्जितदुष्प्रमार्जितोच्चारप्रश्रवणभूमी पौषधस्य च सम्यगननुपालनमिति, पंचाप्येते स्पष्टा, नवरमप्रत्युपेक्षितं- दृष्ट्या अनिरीक्षितं तथैव प्रमादितया न सम्यगवलोकितं दुष्प्रत्युपेक्षितमुच्यते, अप्रमार्जितं रजोहरणादिनाऽशोधितं, दुष्प्रमार्जितं तैनैव सम्यगशोधितं, रजोहरणं चौपग्राहिकं साधुसमीपे यदि भवति तदा तद्याचते, तदभावे च वस्त्रांचलेन प्रमार्जयति, शयनं शय्या तदर्थः संस्तारकः शय्यासंस्तारकः, पौषधस्य च सम्यगनुपालनं तदा भवति यदा पोषधितोऽपि चेतसा आहारं प्रार्थयते, पारणके च आत्मार्थमादरं कारयति, शरीरे वा केशरोमादिसंस्थापनोद्वर्त्तनादीनि शृंगारबुद्ध्या करोति, अब्रह्म सावद्यव्यापारं च कंचिन्मनःप्रभृतिभिः सेवत इति । अथातिथिसंविभागलक्षणं चतुर्थं शिक्षाव्रतमुच्यते, तत्र तिथिपर्वादिलौकिकव्यवहारत्यागाद् भोजनकालोपस्थायी श्रावकस्यातिथिः साधुरुच्यते,तदुक्तम्-''तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥'' तस्यातिथेः संगतो- निर्दोषो न्यायागतानां कल्पनीयानां श्रद्धासत्कारादिक्रमयुक्तः पश्चात्कर्मपरिहारार्थं भागः-अंशः अतिथिसंविभागः, अस्यापि पंचातिचारास्तद्यथा- सचित्तनिक्षेपः सचित्तपिधानं कालातिक्रमः परव्यपदेशः मत्सरिकता चेति, तत्र सचित्ते पृथिव्यादौ साधुदेयस्य वस्तुनः निक्षेपः-स्थापनं सचित्तनिक्षेपः१, तस्यैव सचित्तेन कूष्माण्डफलादिना पिधानं सचित्तपिधानं२, कालस्य- साधूचितभिक्षासमयस्यातिक्रमः- अदित्सया अनागतभोजनपश्चाद्भोजनादिद्वारेणोल्लंघनं कालातिक्रमः३, परस्य-आत्मव्यतिरिक्तस्य व्यपदेशः स्वकीयेऽपि साधूचितवस्तून्यदित्सयैव परसत्कमिदं न मदीयमिति साधुसमक्षं भणतः४, मत्सरः-असहनं साधुभिर्याचितस्य कोपनं, अथवा स कश्चिद्रंकमात्रोऽपि

ददाति अहं तु किं ततोऽपि हीन इत्याद्यहंकाररूपो मत्सरः सोऽस्यास्तीति मत्सरिकः तद्भावस्तत्ता ५॥ तदेवमुक्तानि लेशतो द्वादशापि श्रावकव्रतानि, विस्तरतस्त्वावश्यकादिभ्योऽवसेयानि, एतद्भणने च व्याख्याता देशचरणस्य मूलगुणा उत्तरगुणाश्चेति गाथार्थः ॥ ननु मूलगुणैरुत्तरगुणैश्च मीलितैः कियत्संख्यं देशचरणं भवतीति, उच्यते, द्वादशभेदं, कथमित्यत्राह—

**पंच य अणुव्वयाइं गुणव्वयाइं च हुंति तिन्नेव । सिक्खावयाइं चउरो सव्वंचिय होइ बारसहा ॥ १९६ ॥**

गतार्थैव ॥ उक्तं सप्रभेदं देशचरणं, इदानीं सर्वचरणं निरूपयन्नाह—

**मूलुत्तरगुणभेएण सव्वचरणंपि वन्नियं दुविहं । मूले पंच महव्वय राईभोयणविरमणं च ॥ ११७ ॥**

पाठसिद्धैव, नवरं कश्चिदत्र प्रेरयति–ननु सर्वचारित्रे पंच महाव्रतानि रात्रिभोजनविरमणं च मूलगुणेष्वितीहोक्तं, देशचारित्रे तु रात्रिभोजनमुत्तरविरमणगुणेषु निर्णीतमिति कोऽत्र विशेषः?, सत्यं, किन्तु सर्वचारित्रिणः सर्वसावद्यव्यापारनिवृत्तत्वात् सर्वेष्वपि मूलगुणरूपेषु महाव्रतेषु रात्रिभोजनविरमणमत्यन्तोपकारितया मूलगुणेषु पठितं, देशचारित्रिणस्त्वारम्भजप्राणातिपातादिभ्यो निवृत्तत्वात् मूलगुणेषूपकारमात्रतयैव रात्रिभोजनविरमणं वर्तत इत्युत्तरगुणेष्वधीतमिति । उक्ताः सर्वचरणमूलगुणाः, तदुत्तरगुणान्निरूपयन्नाह—

**पिंडविसोही४समिई५भावण१२ पडिमा य१२इंदियनिरोहो५ । पडिलेहण २५ गुत्तीओ३ अभिग्गहा ४ उत्तरगुणेसु**

प्रकटार्था, नवरमुपलक्षणमात्रमेव पिण्डविशुद्ध्यादीनामुत्तरगुणत्वं, ततश्च 'इच्छा मिच्छा तहक्कारो' इत्यादिप्रकारा अन्या अपि सामाचार्योऽत्रोत्तरगुणेषु द्रष्टव्याः, तदेवं लेशमात्रतया निरूपितं भेदतश्चारित्रं, एवमपरेऽपि सामायिकच्छेदोपस्थापनीयादयः चारित्रभेदाः समयचर्याभिज्ञैरिह वक्तव्याः ॥ एतदेव पूर्वार्द्धेन वक्ष्यमाणस्तदर्हद्वारप्रस्तावनां च कुर्वन्नाह—

**इय एवमाइभेयं चरणं सुरमणुयसिद्धिसुहकरणं । जो अरिहइ घित्तुं जे तमहं वोच्छं समासेणं ॥ ११९ ॥**

इत्येवमादयो भेदा यस्य तत्तथाभूतं सुराश्च मनुजाश्च सिद्धिश्च तासां सुखं-शक्रचक्रवर्त्यादिभोगजनितं निरुपमस्वाभाविकपरमानन्दरूपं चरणं-चरणकरणशीलं यच्चरणं तद्यो ग्रहीतुमर्हति तमहं वक्ष्य इति गाथार्थः ॥ तत्र देशचारित्रयोग्यं तावद्दर्शयन्नाह—

**संवेगभावियमणो सम्मत्ते निच्चलो थिरपइन्नो । विजिइंदिओ अमाई पन्नवणिज्जो किवालू य ॥ १२० ॥**

**जइधम्मंमिवि कुसलो धीमं आणारुई सुसीलो य । विण्णायतस्सरूवो अहिगारी देसविरईए ॥ १२१ ॥**

द्वे अप्यनिगूढार्थे, नवरमसंविग्नस्य गुणोत्कर्षाधानं प्रयासमात्रफलमेवेति संवेगभावितमनस्त्वविशेषणं, संवेगश्च व्यवहारतो मिथ्यादृष्टेः शिथिलसम्यक्त्वस्यापि वा भवेत्, तयोरपि चरणगुणारोपणं सन्निपातालिंगितस्य पयःशर्करापानमिव दोषायैव, तत्रादराद्यभावेन विराधनादिदोषप्रसंगादिति सम्यक्त्वनिश्चलताविशेषणं, सोऽपि चारित्रावरणीयकर्मोदयादस्थिरप्रतिज्ञोऽपि स्यादिति स्थिरप्रतिज्ञत्वविशेषणं, अयं च स्थिरप्रतिज्ञतया यद्यपि व्रतानि सर्वथा न त्यजेत् तथापि तथाविधकर्मोदयादजितेन्द्रियत्वेन सातिचाराणि कुर्यादिति विजितेन्द्रियविशेषणं, एते च पुर्वोक्तगुणा उदायिनृपमारिकादेरिव बहिर्वृत्त्या भवेयुर्मायाविनोऽपीत्यमायित्वविशेषणं, अयमपि तथाविधज्ञानावरणाद्युदयसामर्थ्यादाग्रह्यपि क्वचिदर्थे स्यादिति प्रज्ञापनीयत्वविशेषणं, सत्स्वप्येषु गुणेषु दयामूलत्वाद्धर्मस्य दयापरत्वं सविशेषमन्वेषणीयमिति कृपालुत्वविशेषणं, एवम्भूतगुणेनापि समितिगुप्त्युपयोगतीव्रतपश्चरणपरीषहसहनप्रतिमाजिनकल्पप्रतिपत्त्यादिकं यतिधर्मस्वरूपं येन सम्यग् नाकर्णितं स्यात् तस्यैतदपि देशविरतिमात्रं दुष्करं प्रतिभासते, तस्मिंस्त्वतिदुष्करे समाकर्णिते देशविरतिमात्रमेवासौ कुर्यादिति आदिधर्मापेक्षया यतिधर्मकुशलत्वविशेषणं, उक्तश्च—

"नाएऽणगारधम्मे सावयधम्मे भवेज्ज जोगो" त्ति, ईदृशोऽपि अनिपुणबुद्धिस्तीर्थान्तरीयादिभिः क्षोभ्येत् ततो धीमत्त्वविशेषणम्, इत्थंभूतोऽपि पूर्वावस्थायां शुष्कतार्किकैः शाक्यादिभिर्वासितः सूक्ष्मनिगोदजीवसत्तादिप्रतिपत्तावपि केवलां युक्तिमेवान्विष्येद्, अयं चासत्पक्ष एव, यत उक्तं परमगुरुभिः-"आणागिज्झो अत्थो आणाए चेव सो कहेयव्वो। दिट्ठंतिउ दिट्ठंता कहणविहिविराहणा इहरा ॥१॥" इत्यालोच्याज्ञारुचित्वविशेषणं, ब्रह्मचर्यादिषु शील(वान्)सुखेनैव निर्वहेदिति सुशीलत्वविशेषणं, एवंभूतोऽपि तथाविधो-द्यमाभावादतिरभसप्रवृत्तो वा सम्यगविचार्यैव देशविरतिं प्रतिपद्येत, न चैतद्युक्तं "पढमं नाणं तओ दया" इत्यादिवचनाद्, अतो विज्ञाततत्स्वरूपत्वविशेषणं, उपलक्षणं चैते, अन्येऽपि विनीतत्वमार्गानुसारित्वादयो गुणा यथासम्भवं ग्राह्याः, एवंगुणविशिष्टो देशविरतिप्रतिपत्तावधिक्रियत इति गाथाद्वयभावार्थः ॥ अथ सर्वचरणार्हान्निरूपयन्नाह—

पाएण हुंति जोग्गा पव्वज्जाएवि तेच्चिय मणुस्सा। देसकुलजाइसुद्धा बहुखीणप्पायकम्मंसा ॥ १२२ ॥

य एव देशविरतेर्योग्या उक्ताः सर्वविरतिरूपायाः प्रव्रज्याया अपि त एव, तर्हि प्रायोग्रहणं किमर्थमित्याह—मनुष्याः, नारकतिर्यग्देवानां सर्वविरत्यनर्हत्वात् मनुष्या एव तद्योग्याः, तेऽपि देशकुलजातिभिः शुद्धाः, अनार्यो हि देशाशुद्ध उच्यते, स च न दीक्ष्यते, भाषाद्यपरिज्ञानेन तस्य चरणसम्यक्प्रवृत्त्ययोगात्, मातृपक्षो जातिः, पितृपक्षः कुलं, तदशुद्धो न व्रतार्हः, तन्निर्वाहे व्यभिचारसम्भवात्, देशविरतिस्तु तिर्यगादिभ्यो दीयत इति न तत्प्रतिपत्तुर्मनुष्यत्वदेशशुद्धत्वादीनि विशेषणानि कृतानीति भावः, अपरंच देशविरतिप्रतिपत्तुः सकाशाद् बाह्यचेष्टानुमानादिना निश्चित्य बहुक्षीणप्रायःकर्मांशाः सर्वविरतिप्रतिपत्तावधिकरणीयाः, यावत्यां हि कर्मस्थितौ सम्यक्त्वं लभ्यते तस्याः पल्योपमपृथक्त्वे क्षीणे देशविरतः श्रावको भवति, ततोऽपि सङ्ख्यातेषु

सागरोपमेषु क्षीणेषु चरणं लभ्यते, ततोऽपि तावत्स्वेव तेषु क्षीणेषूपशमश्रेणिः, ततोऽपीयत्स्वेवैतेष्वतिक्रान्तेषु क्षपकश्रेणिः, तदुक्तं "सम्मत्तम्मि उ लद्धे पलियपुहुत्तेण सावओ होज्जा। चरणोवसमखयाणं सागारसंखंतरा हुंति ॥ १ ॥" इति बहुक्षीणप्रायःकर्मांशाः, अत्राप्युपलक्षणमात्रमेते गुणाः, वयःप्राप्तत्वनीरोगत्वकल्याणाङ्गत्वादयोऽन्येऽप्यत्र गुणा द्रष्टव्या इति गाथार्थः। अन्वयव्यतिरेकाभ्यां निर्णीतोऽर्थः सुग्राह्यो भवतीत्यतोऽन्वयेनोक्ताः सर्वविरतेर्योग्याः, अथ तद्व्यतिरेकिणोऽयोग्यानाह—

**अट्ठारस पुरिसेसुं वीसं इत्थीसु दस नपुंसेसु। जिणपडिकुट्ठत्ति तओ पव्वावेउं न कप्पंति ॥ १२३ ॥**

पुरुषेषु मध्येऽष्टादश स्त्रीषु विंशतिः नपुंसकेषु दश एते जिनैः प्रतिक्रुष्टा-निवारिता इत्यतः प्रव्राजयितुं न कल्पते, बहुदोषसम्भवादिति गाथार्थः ॥ तत्र ये तावत् पुरुषेष्वष्टादश तान् दर्शयन्नाह—

**बाले १ बुड्ढे २ नपुंसे ३ य, कीवे ४ जड्डे ५ य वाहिए६। तेणे७ रायावगारी८ य, उम्मत्ते९ य अदंसणे१० ॥१२४॥**
**दासे११ दुट्ठे१२ य मूढे१३ य, अणत्ते१४ जुंगिए१५ इय। ओबद्धए१६ य भयए१७ य, सेहनिप्फेडिया१८इय॥१२५॥**

तत्राष्टौ सप्त वा वर्षाणि यावद्बालोऽत्राभिधीयते,सप्ततिवर्षेभ्य उपरि वृद्धः,अन्ये त्वाहुः-अर्वागपीन्द्रियादिहानिदर्शनात् षष्टिवर्षेभ्योऽप्युपरि वृद्धोऽभिधीयते, न स्त्री न पुमान् नपुंसकं, यः स्त्रीभिर्भोगैर्निमन्त्रितोऽसंवृत्ताया वा स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं वा मन्मनोल्लापादिकं तासां श्रुत्वा समुद्भूतकामाभिलाषोऽधिसोढुं न शक्नोति स क्लीबः, जड्डस्तु त्रिधा-भाषया शरीरेण करणेन च, भाषाजड्डः पुनरपि त्रिधा-जलमूकः मन्मनमूकः एलकमूकः, जलनिमग्न इव बुडबुडयमानो यो वक्ति स जलमूकः, यस्य तु वदतः खच्यमानमिव वचनं स्खलति स मन्मनमूकः, यस्त्वेलक इवाव्यक्तं मूकतया शब्दमात्रमेव करोति स एलकमूकः, यः पथि भिक्षा-

टने वन्दनादिषु चातीव स्थूलतयाऽशक्तो भवति स शरीरजड्डः, करणं-क्रिया तस्यां जड्डः करणजड्डः, समितिगुप्तिप्रतिक्रमणप्रत्युपेक्षणसंयमपालनादिक्रियां पुनरसकृदुपदिश्यमानामप्यतीव जडतया यो ग्रहीतुं न शक्नोति स करणजड्ड इत्यर्थः, भङ्गदरातीसारकुष्ठप्लीहशूलार्शःप्रभृतिरोगैर्ग्रस्तो व्याधितः, क्षत्रखननमार्गपातनादिचौर्यनिरतः स्तेनः, श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहविधायको राजापकारी,यक्षादिना प्रबलमोहोदयेन वा परवशतां नीत उन्मत्तः,न विद्यते दर्शनं-दृक् यस्येत्यदर्शनी अंधः,स्त्यानर्द्धिनिद्रोदयवानप्यत्र द्रष्टव्यः, गृहदास्याः संजातो दुर्भिक्षादिष्वर्थादिना वा क्रीतः ऋणादिव्यतिकरे वाऽवरुद्धो दास उच्यते, दुष्टो द्विधा-कषायदुष्टो विषयदुष्टश्च, तत्र सर्षपभर्जिकाभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः, अतीव परयोषिदादिषु गृद्धो विषयदुष्टः, स्नेहाज्ञानादिपरतंत्रतया यथाऽवस्थितवस्त्ववगमशून्यमानसो मूढः, यो राजादीनां हिरण्यादिकं धारयति स ऋणार्तः, जातिकर्मशरीरादिभिर्दूषितो जुङ्गितः, तत्र मातङ्गकोलिकवरुंडसूचिकाच्छिपकादयोऽस्पृश्या जातिजुङ्गिताः, स्पृश्या अपि स्त्रीमयूरकुक्कुटादिपोषकाः वंशवरत्रादिरोहणनखप्रक्षालनसौकरिकत्ववागुरिकत्वादिनिन्दितकर्मकारिणः कर्मजुङ्गिताः, चरणकरकर्णादिवर्जिताः पङ्गुकुब्जवामनककाणप्रभृतयः शरीरजुङ्गिताः, अर्थग्रहणपूर्वकं विद्यादिग्रहणनिमित्तं वा एतावन्ति दिनानि त्वदीयोऽहमित्येवं येनात्मनः परायत्तता कृता भवति सोऽवबद्धः, रूपकादिमात्रया भृत्या धनिनां गृहे दिनपाटिकादिमात्रेण तदादेशकरणाय प्रवृत्तो भृतकः,:, शिक्षकस्य-दीक्षितुमिष्टस्य निस्फेटिका-अपहरणं शिक्षकनिस्फेटिका, तद्योगाद् यो मातापित्रादिभिरननुज्ञातोऽपहृत्य दीक्षितुमिष्यते सोऽपि शिक्षकनिःस्फेटिका, इत्येतेऽष्टादश पुरुषस्य-पुरुषाकारवतो दीक्षानर्हा भेदा इत्युत्तरगाथायां सम्बन्धः, एषां च बालादीनां दीक्षाप्रदानेन प्रवचनमालिन्यसंयमात्मविराधनादयो दोषाः सुखावसेया एवेति दर्शिताः, वैरस्वाम्यादीनां च प्रव्रा-

जनेऽपवादपदं निशीथादवसेयमिति सातिरेकगाथाद्वयार्थः ॥ अथोक्तानेव व्रतानर्हपुरुषभेदानुपसंहरन्ननुक्तांस्तु स्त्रीभेदान् दर्शयन्नाह–

इय अट्ठारस भेया पुरिसस्स तहित्थियाएँ ते चेव । गुव्विणि सबालवच्छा दुन्नि इमे हुंति अन्नेऽवि ॥ १२६ ॥

गतार्थैव, नवरं यथा पुरुषाकारवतः तथा स्त्रीजनाकारवतोऽपि व्रतायोग्या बालादयोऽष्टादश भेदास्तावन्त एव, अन्यावपि द्वाविमौ भवतः, तद्यथा-गुर्विणी सह बालेन-स्तनपायिना वत्सेन वर्तत इति सबालवत्सा,एते सर्वेऽपि विंशतिः स्त्रीभेदा इति॥१२६ ननु नपुंसकस्य प्रव्रज्या भवद्भिर्निषिद्धा, स च षोडशभेदः श्रुते निर्दिष्टः तत् किं सर्वस्यापि सा न दीयते आहोश्वित् कस्यचिदेव?, उच्यते, दश तद्भेदाः प्रव्रज्याऽयोग्याः, षट् पुनर्योग्याः, अत एव मूलगाथायां " दस नपुंसग " त्ति भणितं, के पुनस्ते दशेत्याह-

पंडए१ वाइए२ कीवे३, कुंभी४ ईसालुएत्ति५ य । सउणी६ तक्कम्मसेवी ७ य, पक्खियापक्खिए ८ इय ॥ १२७ ॥ सोगंधिए९ य आसित्ते१०, दस एए नपुंसगा । संकिलिट्ठत्ति साहूणं, पव्वावेउं अकप्पिया ॥ १२८ ॥

तत्र पण्डकस्य स्वरूपं तावदत्रैव किञ्चिद् वक्ष्यते, शेषाणां तु वातक्यादीनां स्वरूपं विशेषतो निशीथपाठादवसेयं, सामान्यतः पुनरत्रापि विभणिषुराह-एते दश नपुंशकाः साधूनां प्रव्राजितुमकल्पिताः-अयोग्याः, कुत इत्याह-'संकिलिट्ठ' त्ति अविशेषतस्तावन्नगरमहादाहसमानकामाध्यवसायसम्पन्नत्वात् सर्वेऽप्यमी संक्लिष्टाः स्त्र्याद्यासेवामाश्रित्यातीवाशुभाध्यवसायवन्त इति दीक्षानर्हा इत्यर्थः ॥ के पुनस्तर्हि षड्भेदाः प्रव्रज्यायोग्या इत्याह—

वद्धिए१ चिप्पिए२ चेव, मंतओसहिउवहए३-४ । इसिसत्ते५ देवसत्ते६ य, पव्वावेज्ज नपुंसए ॥ १२९ ॥

आयन्यां राजअन्तःपुरमहत्तकपदप्राप्त्यादिनिमित्तं यस्य बालत्वेऽपि छेदं दत्त्वा वृषणौ गालितौ भवतः स वर्द्धितकः, यस्य तु जातमात्रस्याङ्गुलिभिर्मर्दयित्वा वृषणौ द्राव्येते स चिप्पितः, एतयोश्चैवं कृते सति किल नपुंसकवेदोदयः सम्पद्यते, कस्यचित्तु मन्त्रसामर्थ्यादन्यस्य त्वौपधिप्रभावात् पुरुषवेदे स्त्रीवेदे वा समुपहते सति नपुंसकवेदः समुदेति, अपरस्य तु मदीयतपःप्रभावा नपुंसको भव त्वमिति ऋषिशापाद् अन्यस्य तु देवशापात्तदुदयो जायत इत्येतान् षट् नपुंसकान्निशीथोक्तविशेषलक्षणसम्भवे सति प्रव्राजयेदिति श्लोकार्थः ॥ अथ पूर्वोक्तपण्डकस्वरूपं किञ्चित् स्वयमेव विभणिषुराह —

महिलासहावो १ सरवण्णभेओ २, मिंढं महंतं ३ मउया य वाणी ४ ।
ससद्दयं मुत्तमफेणयं च, एयाणि छप्पंडगलक्खणाणि ॥ १३० ॥

पुरुषाकारधारिणोऽपि महिलास्वभावत्वं पण्डकस्यैकं लक्षणं, तथाहि-गतिस्तस्य मदाकुला मन्दा च भवति, सशङ्कं च पृष्ठतोऽवलोकमानो गच्छति, शरीरं च शीतलं मृदु च भवति, योषिदिवानवरतं हत्थोल्लकान् प्रयच्छन् उदरोपरि तिर्यग्व्यवस्थापितवामकरतलस्य वा उपरिष्टाद्दक्षिणकरकूर्प्परं विन्यस्य दक्षिणकरतले च मुखं कृत्वा बाहुं च विक्षिपन् भाषते, अभीक्ष्णं च कटिहस्तकं ददाति, प्रावरणाभावे स्त्रीवद् बाहुभ्यां हृदयमाच्छादयति, भाषमाणश्च पुनः पुनः सविभ्रमं भ्रूयुग्ममुत्क्षिपति, केशबन्धनप्रावरणादिकं च स्त्रीवत् करोति, योषिदाभरणादिपरिधानं च बहु मन्यते, स्नानादिकं च प्रच्छन्ने समाचरति, पुरुषसमाजमध्ये च सभयशङ्कितस्तिष्ठति, स्त्रीसमाजे तु निःशङ्कः, प्रमदोचितं च रंधनखण्डनपीषणादिकं कर्म्म च समाचरति इत्यादि महिलास्वभावत्वं पण्डकलक्षणं, अपरं च स्वरवर्णभेदः, स्वरो वर्णः उपलक्षणत्वात् गन्धरसस्पर्शाश्च स्त्रीपुरुषापेक्षया विलक्षणास्तस्य सम्भवंतीत्यर्थः,

मेण्ढ्रं-पुरुषचिह्नं महद्भवति, मृद्वी च वाणी ललनाया इव सञ्जायते, योषित इव सशब्दं मूत्रमभिजायते, फेनरहितं तद्भवति, एतानि षट् पण्डकलक्षणानि, वातक्यादीनां तु लक्षणानि प्रकल्पादवसेयानीत्युक्तमेवेति वृत्तार्थः ॥ तदेवं दर्शिताः सर्वविरतेरयोग्याः, देशविरत्ययोग्यास्त्वसंवेगभावितमानसादयः स्वयमेवाभ्यूह्याः ॥ एवं च सत्यवसितं तदर्हद्वारं, अथ प्रतिपत्तिविधिप्ररूपणाद्वारमाभिधित्सुराह--

बालाइदोसरहिओ उवट्ठिओ जइ हवेज्ज चरणत्थं । तं तस्स पउत्तालोयणस्स सुगुरूहिं दायव्वं ॥ १३१ ॥

प्रकटार्था,नवरं तामिति चरणं,प्रथममेव तावदालोचनामसौ दाप्यत इति किलात्रोक्तं,तत् किमेतावन्मात्रेणैव तद्दीयते?,नेत्याह—

आलोयणसुद्धस्सवि दिज्ज ।विणीयस्स नाविणीयस्स । न हि दिज्जइ आभरणं पलियत्तियकन्नहत्थस्स ॥१३२॥

इयमपि सुगमा,नवरं परिकर्त्तितकर्णहस्तत्वमुपलक्षणं छिन्नचरणत्वादीनां, कथंभूतः पुनर्विनीतो ज्ञातव्यः?,यस्य तद्देयमित्याह-

अणुरत्तो भत्तिगओ अमुई अणुवत्तओ विसेसन्नू । उज्जुत्तोऽपरितंतो इच्छियमत्थं लहइ साहू ॥१३३॥

स एव साधुरीप्सितं चरणादिकमर्थं लभते, यः कथंभूत इत्याह--अनुरक्तो, वाससि नीलीरङ्ग इव गुरुषु प्रतिबद्ध इत्यर्थः, भक्तिः-कृताञ्जलिपुटादिभावेन गुरुसेवा तां गतः-प्रतिपन्नो गुरुभक्तिगतः, एवंभूतश्च कियन्तमपि कालं स्थित्वा ततोऽन्यत्रापि व्रजेदित्याह-'अमुइ' त्ति चरमोच्छ्वासनिःश्वासौ यावद् गुरुचरणमूलामोचक इत्यर्थः, अनुवर्त्तकः सर्वस्यापि साध्वादेरौचित्यप्रवृत्तिनिष्ठ इत्यर्थः, विशेषज्ञः सदसद्वस्तुविवेचक इति भावः,उद्युक्तः अध्ययनवैयावृत्त्यादिक्रियास्वतीवोद्यमपर इति हृदयं, अपरितान्तो-विवक्षितार्थसाधनेऽनिर्विण्णः, आह-ननु विनीतत्वं तदर्हद्वारे सङ्गृहीतमेव किं पुनरुपन्यस्तं ?, सत्यं, किन्तु विनयगुणस्यातीव

मुख्यतयाऽन्वेषणीयत्वख्यापनार्थं पुनरप्यत्रोपादानमित्यदोष इति गाथार्थः ॥ विनीतस्यापि केन विधिना चरणं देयमित्याह—

**विणयवओऽवि हु कयमंगलस्स तदविग्घपारगमणाय । देज्ज सुकओवओगो खित्ताइसु सुप्पसत्थेसु ॥१३४॥**

विनयवतोऽपि दद्यास्त्वं चारित्रं, कथंभूतस्येत्याह-कृतजिनचैत्यसङ्घपूजादिमङ्गलस्य, किमर्थमित्याह--तस्य-चरणस्याविघ्नं पारगमनाय, गुरुगतं विधिमाह- सुष्ठु कृतो-विहित उपयोगो निमित्तादिषु येन स तथा, केष्वित्याह--क्षेत्रादिषु सुप्रशस्तेषु, तत्र क्षेत्रे जिनायतनेषु इक्षुक्षेत्रक्षीरवृक्षसमीपादौ दातव्यं चरणं, न तु भग्नध्यामितकचवराकीर्णादौ, कालेऽपि-चउद्दसिं पन्नरसिं च वज्जए अट्ठमिं च नवमिं च । छट्ठिं चउत्थिं बारसिं च सेसासु दिज्जाहि ॥ १ ॥ तिसु उत्तरासु तह रोहिणीसु कुज्जा हु सेहनिक्खमणं । गणिवायए अणुन्ना महव्वयाणं च आरुहणे ॥ २ ॥' त्यादि, तिथिनक्षत्रप्रभृतिशुद्धिकलिते, नाप्रशस्ते, भावेऽपि प्रशस्तहोरादिप्रवृत्तिविशुद्ध इति गाथार्थः ॥ प्रवचनोक्तस्य सर्वस्यापि विधिरिह दर्शयितुमशक्यत्वाद्भव्यसत्त्वपरीक्षाकालमुपसंहरन्नाह-

**इय एवमाइविहिणा पाएण परिक्खिऊण छम्मासं । पव्वज्जा दायव्वा सत्ताणं भवविरत्ताणं ॥ १३५ ॥**

प्रकटार्थैव, नवरं प्रायोग्रहणं वैरस्वाम्यार्यरक्षितादिभिरुदायिनृपकुमारप्रख्यैश्च व्यभिचारसम्भवादिति ॥ तदेवं सर्वविरतिसामायिकप्रतिपत्तिविधिरुक्तः, साम्प्रतं महाव्रतारोपणं लेशतो दर्शयितुमिदमाह--

**विहिपडिवन्नचरित्तो दढधम्मो जइ अवज्जभीरू य । तो सो उवट्ठविज्जइ वएसु विहिणा इमो सो उ ॥१३६॥**

सुगमैव, नवरं 'इमो सो उ' त्ति दृढधर्मत्वपापभीरुत्वादिषु निश्चितेषु येन विधिना व्रतोपस्थापना क्रियते स विधिः पुनरयं । क इत्याह—

पढिए य कहिय अहिगय परिहारुट्ठावणाए सो कप्पो । छज्जीवघायविरओ तिविहंतिविहेण परिहारी ॥१३७॥

यथोक्तगुणविशिष्टोऽपि स एवोपस्थापनायां--व्रतारोपणायां कल्पो--योग्यः, यः कथंभूतः?-' परिहार 'त्ति प्राकृतत्वाल्लुप्तेकारान्तनिर्देशः, यः परिहारीत्यर्थः, क परिहारीतयाह-पठिते पड्जीवनिकायमहाव्रतस्वरूपादिप्रतिपादके शस्त्रपरिज्ञादशवैकालिकाद्युचितसूत्रे तावदधीते, ततो गुरुणा तदर्थे कथिते-व्याख्याते, शिष्येणापि तस्मिन्नधिगते-सम्यगवधारिते सति, भवत्वेवं, किन्तु किं परिहरन् परिहारीत्यवसेय इत्याह--षड्जीवनिकायघातात् त्रिविधं त्रिविधेन मनोवाक्कायैः करणकारणानुमतिभिर्विरतो-निवृत्तो यः स इह परिहारीत्यभिमतः, सूत्रतोऽर्थतश्चाधिगतशस्त्रपरिज्ञादिसिद्धान्तः, तत्रापि षड्जीवनिकायं श्रद्दधानो रक्षंश्च व्रतोपस्थापनायोग्यो भवतीति तात्पर्यमिति गाथार्थः ॥ विपर्यये दोषमाह--

अप्पत्ते अकहित्ता अणहिगयऽपरिच्छणे य आणाई । दोसा जिणेहिं भणिया तम्हा पत्तादुवट्ठावे ॥१३८॥

इहानन्तरमेव वच्यमाणन्यायेन जघन्यतः सप्तस्वहोरात्रेषु उत्कृष्टतः षट्सु मासेष्वतिक्रान्तेषूपस्थापनायां क्रमप्राप्तोऽभिधीयते, ततश्च यथोक्तकालादर्वागेव क्रमेणाप्राप्तेऽपि शैक्षके, अकथयित्वा यथोक्तसूत्रार्थं, अनधिगते च शिष्येण तस्मिन्, अपरीक्षणे च शिक्षकस्य, किं जीवनिकायानसौ श्रद्धत्ते न वा?, श्रद्धानेऽपि तान् रक्षति न वेत्येवं वृषभैः सूत्रोक्तविधिना परीक्षायामकृतायामित्यर्थः, उपस्थापनां कुर्वत इति सर्वत्र गम्यते, आज्ञाऽनवस्थाविराधनादयो दोषा जिनैर्भणिताः, तस्मात् क्रमप्राप्तादीनेवोपस्थापयेत्, नान्यानिति गाथार्थः ॥ क्रमप्राप्तत्वकालं स्वयमेव दर्शयन्नाह—

सेहस्स तिन्नि भूमी जहन्न तह मज्झिमा उ उक्कोसा । राइंदि सत्त चउमासिया य छम्मासिया चेव ॥१३९॥

शिक्षकस्य अभिनवप्रव्रजितस्य व्रतोपस्थापनायां कर्त्तव्यायां 'तिन्नि'त्ति तिस्रो भूमिका योग्यास्थानविशेषरूपाः, तद्यथा-जघन्या तथा मध्यमा उत्कृष्टा च, तत्र जघन्या सप्ताहोरात्रिकी, मध्यमा चातुर्मासिकी, उत्कृष्टा तु षाण्मासिकी, जघन्यतः सप्तभिरहोरात्रैः मध्यमतश्चतुर्भिर्मासैः उत्कृष्टतस्तु षड्भिर्मासैरतिक्रान्तैर्व्रतोपस्थापनायोग्यः शिक्षको भवतीति गाथार्थः ॥ तत्र कस्य का भूमिर्भवतीत्याह—

पुव्वोवट्ठपुराणे करणजयट्ठा जहन्निया भूमी । उक्कोसा उ दुमेहं पडुच्च असद्दहाणं च ॥ १४० ॥

पुराणः समयपरिभाषया व्रतभ्रष्ट उच्यते, पूर्वव्रतेषूपस्थापितः पूर्वोपस्थापितः स चासौ पुराणश्च पूर्वोपस्थापितपुराणस्तस्मिन्, यथोक्ता जघन्या भूमिः, कर्मक्षयोपशमवशात् पुनरप्यसौ कथमपि प्रव्रजितोऽपि सप्तभिरहोरात्रैरतिक्रान्तैर्व्रतेषूपस्थाप्यते, ननु तस्य सूत्रं पूर्वाधीतमेव, ततश्च सप्ताहोरात्रातिक्रममपि यावत् किमर्थं विलम्ब्यत इत्याह--करणानि-इन्द्रियाणि तज्जयार्थं, एतावन्तमपि कालं विना करणजयोऽपि न सम्यग् लक्ष्यत इति भावः, उत्कृष्टा तु षाण्मासिकी भूमिर्दुर्मेधसं मन्दप्रज्ञं प्रतीत्य, तस्य हि यथोक्तसूत्रं शीघ्रमेव नागच्छतीति भावः, अथवा अश्रद्दधानं प्रतीत्योत्कृष्टा भूमिः, शीघ्राधीतसूत्रोऽपि मिथ्यात्वमोहोदयादेकेन्द्रियजीवादिकं यो न श्रद्धत्ते तस्यापि बोध्यमानस्योत्कृष्टा षाण्मासिकी भूमिर्भवतीत्यर्थ इति गाथार्थः ॥ मध्यमा तर्हि कस्येत्याह-

एमेव य मज्झिमिया अणहिज्जंते असद्दहंते य । भावियमेहाविस्सवि करणजयट्ठा य मज्झिमिया ॥१४०॥

एवमेव दुर्मेधस्त्वेन सूत्रमनधीयानो मोहोदयाद्वा अश्रद्धो भवति, पूर्वोक्तात् किञ्चिद्विशिष्टतरे मध्यमा भूमिर्भवति, भावितमेधाविनोऽप्यपुराणस्य करणजयार्थं मध्यमा भूमिर्द्रष्टव्येति गाथार्थः ॥ तदेवं लेशतः कृता प्रतिपत्तिविधिप्ररूपणा, विस्तरतस्तु

समयसागरादवसेया, साम्प्रतं पुनरुत्सर्गापवादविशुद्ध्या तच्चारित्रं कस्य भवतीति चिन्तनीयं, तत्र पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि समितिगुप्त्यादिविशुद्धानि पालयतः तद् भवति, अतः क्रमेण तत्परिपालनोपदेशमभिधित्सुः प्राणातिपातव्रतपरिपालनोपदेशं तावदुत्सर्गतः प्रयच्छन्नाह--

**इय विहिपडिवन्नवओ जएज्ज छज्जीवकायजयणासु । दुग्गइनिबंधणच्चिय तप्पडिवत्ती भवे इहरा ॥१४२॥**

सुबोधैव, नवरं ' तप्पडिवत्ती ' ति व्रतप्रतिपत्तिः ॥ षड्जीवनिकाययतनोपायमेवाह—

**एगिंदिएसु पंचसु तसेसु कयकारणाणुमइभेयं । संघट्टणपरितावणवेरमणं चयसु तिविहेण ॥ १४३ ॥**

पृथिव्यादिषु पंचस्वेकेन्द्रियेषु षष्ठेषु च द्वीन्द्रियादिषु त्रसेषु त्यज त्वं, किं तदित्याह--सङ्घट्टनं चरणस्पर्शादिजनितं परितापनं-लकुटघातादिजनितं गाढपीडास्वरूपं व्यपरोपणं-प्राणेभ्यश्च्यावनं, कथमिदमेकैकं त्यजनीयमित्याह-कृतकारणानुमतिभेदं, केनेत्याह-त्रिविधेन, मनसा वाचा कायेन चेत्यर्थः, मनोवाक्कायैः करणं कारणमनुमतिं चाश्रित्य षड्जीवनिकायेषु सङ्घट्टनादिकं परित्यजता तद्यतनासु प्रयत्नः कृतो भवतीति भाव इति गाथार्थः ॥ अशक्यानुष्ठानमिदमिति चेदित्याह—

**जइ मिच्छदिट्ठियाणवि जत्तो केसिंचि जीवरक्खाए । कह साहूहिं न एसो कायव्वो मुणियसारेहिं ? ॥१४४॥**

यदि नाम अविदितपरमार्थानां मिथ्यादृशामपि केषांचित् स्वाभिप्रायतो जीवरक्षायां कोऽपि कथंचिद् यत्नो दृश्यते, तर्हि कथं मुणितसिद्धान्तसारैः साधुभिरेष जीवरक्षायत्नो न कर्तव्यः ?, कर्त्तव्य एवेत्यर्थः ॥ ननु वाङ्मात्रमेवेदं, कृतस्त्वयं न केनापि भविष्यतीत्याह—

निग्गपाणच्चाएणवि कुणंति परपाणरक्खणं धीरा । विसतुंबयउवभोगी धम्मरुई एत्थुदाहरणं ॥१४५ ॥

अक्षरार्थः सुगम एव, कः पुनरयं विषतुंबकोपभोगी धर्मरुचिरिति ?, कथानकेनोच्यते—

चंपानामेण पुरी सुपसिद्धा अत्थि एत्थ भरहम्मि । भूविलयाए वेणिक्ककसिणघणसुकयसंकिण्णा ॥१॥ सोमे य सोमदत्ते य सोमभूई य माहणा तिन्नि । पुरिसत्थव्व पसिद्धा सहोयरा तत्थ निवसंति॥२॥नागासिरी भूयसिरी जक्खसिरी चेव ताण अणुकमसो । भज्जाओ ताहिं समं चिट्ठंति सुहेण गिहिवासे ॥ ३ ॥ अह महुरयभन्तीए कडुयं विसतुंबयं उवक्खडियं । नागसिरीए कत्थइ गरुयरसवइसमारंभे ॥ ४ ॥ तो गोविय एगंते तीए तं भत्तुणो पभीयाए । नेहाईदव्वखओ बहुओ जं तत्थ संजाओ ॥ ५ ॥ अण्णं च महुरतुंबयमुवक्खडं तीएँ भोयणनिमित्तं । एत्तो च्चिय पुव्वधरा समागया तत्थ उज्जाणे ॥ ६ ॥ नामेण धम्मघोसा थेरा बहुसीससंघपरियरिया । एक्को य तेसि सीसो जिएसु अइपरमकारुणिओ ॥ ७ ॥ समसत्तुमित्तचित्तो विगयममत्तो सएऽवि देहम्मि । अंगोवंगे परिणयजिणिंदवयणामएक्करसो ॥ ८ ॥ इहलोयनिप्पिवासो सयावि परलोयकज्जउज्जुत्तो । मासम्मि अइक्कंते परिभुंजइ सयलकालंपि ॥ ९ ॥ उवसमरयणालंकियसव्वंगो गुरुअणम्मि अणुरत्तो । विजिइंदियमयमारो धम्मरुई नाम अणगारो ॥ १० ॥ अह हिंडंतो उच्चावएसु सो समिइगुत्तिउवउत्तो । कहमवि नागसिरीए गिहं गओ मासपारणए ॥ ११ ॥ तं दट्ठूणं तीए विचिंतियं अहह सुन्दरं जायं । जं एस इहं पत्तो मह गेहे कोऽवि पव्वइओ ॥ १२ ॥ अन्नत्थोज्झिहिइ जओ को बहुयघयाइसंजुयं एयं । विसतुंबयं ? तओऽहं एयस्सवि देमि सव्वंपि ॥ १३ ॥ एवं वियप्पिऊणं तीएँ पावाए तस्स गुणनिहिणो । तं दिन्नं तेणावि हु गहियं दव्वाइसुद्धंति ॥ १४ ॥ पज्जत्तामित्तिएणं मज्झंति विचिंतिऊण स महप्पा । तत्तो विनियत्तिऊणं संपत्तो

गुरुसमीवम्मि ॥ १५ ॥ आलोइयपडिकंतो पडिग्गहं जा गुरूण दंसेइ । तो असुहगंधओ तं गुरूहिं विसतुंबयं नायं ॥ १६ ॥ तो भणिओ धम्मरुई संभंतेहिं गुरूहिं कट्ठमहो । मारेइ भुत्तमेत्तं ता चयसु इमं महाभाग ! ॥ १७ ॥ अन्नं सुद्धाहारं तु गिण्हिउं तं करेसु पारणयं । इच्छंति भणेऊणं थंडिलभूमिं गओ सोऽवि ॥ १८ ॥ सुसिणिद्धतुंबयाओ तओ अहो तेण बिंदुओ एक्को । गहिऊणं परिखित्तो कहंपि जा थंडिले सुद्धे ॥ १९ ॥ ता तत्थ आगयाइं गंधेण पिवीलियासहस्साइं । जा कावि तत्थ लग्गइ पिवीलिया मरइ सा सव्वा ॥ १९ ॥ असमंजसं तयं पासिऊण जीवाण घायणनिमित्तं । तो धम्मरुई चिंतइ उच्छलियअउव्वगुरुविरिओ ॥ २१ ॥ जइ इक्कबिंदुणा इत्तियाण जंतूण होइ वाघाओ । ता सव्वपरिचाए न नज्जए किंपि इह होही ॥ २२ ॥ रक्खेऊण य एक्कं अप्पाणं एत्तियाण वहहेऊ । को होइ किर सयण्णो असासए जीवलोयंमि ? ॥ २३ ॥ मरियव्वं चावस्सं मएवि कइयावि कहवि ता इण्हिं । इत्तियजीवाणं रक्खणम्मि तं जुज्जए मज्झ ॥ २४ ॥ वयणंपि न महरिसिणो जंपंति परस्स पीडसंजणयं । काएण कहमहं पुण करेमि मुणिऊण पावमिणं? ॥ २५ ॥ नियपाणेहिवि धीरा एक्कंपि परं दुहाओ मोयंति । मह पुण विवरीयमिणं निव्वडइ इमं कुणंतस्स ॥ २६ ॥ तम्हा अधुवेण असारएण देहेण खलसहावेण । सुपुरिससेवियं गुणमयं च मग्गं पवज्जामि ॥ २७ ॥ इय चिंतिऊण मुहपोत्तियं च पडिलेहिऊण स महप्पा । नियदेहकुट्टए पक्खिवेइ विसतुंबयं सव्वं ॥ २८ ॥ तम्मि य परिणममाणे देहे जा वेयणा समुच्छलिया । सा कहिउंपि न तीरइ सहिउं पुण दुक्करं चेव ॥ २९ ॥ तो वेयणाइविहुरं अप्पाणं जाणिऊण सो साहू । एगंतमणावाए पडिलेहइ थंडिलं सुद्धं ॥ ३० ॥ संथरइ दब्भसंथारयं च पलियंकएण उवविसिउं । तत्थऽरहंताईणं कयंजली संथवं कुणइ ॥ ३१ ॥ जेहिं भवचारयाओ करुणाइ विमोइओ तहा सक्खं । थेराण धम्मघोसाण ताण सुगुरूण

पणओऽहं ॥ ३२ ॥ पुव्वंपि ताण पासे अट्ठारस पावठाणयाइं मए। पच्चक्खायाइं पुणो ताइं तेसिंपि मूलम्मि ॥ ३३ ॥ पच्चक्खा-
मि इयाणिंपि तह य सव्वं चउव्विहाहारं । चरमुस्सासम्मि सरीरगंपि एयं चइस्सामि ॥ ३४ ॥ इय काउं पणिहाणं दाऊणालोयणं
च सिद्धाणं । पाओवगममुवगओ सुदुकरं सो महाभागो ॥ ३५ ॥ वड्ढंतीए अह वेयणाइ वड्ढइ सुहोऽवि परिणामो । जं मन्नइ
अप्पाणं कयकिच्चं जीवरक्खाए ॥ ३६ ॥ चिंतइ य वेयणाए इमाइ जुज्जिंसु जंतुलक्खाइं । मह पुण एकस्स इमा सावि निरुत्ता
निवियाओ ॥३७॥ ता मरणंपि सुहकरं मह विहियपरोवयारलेसस्स । किं तेण जीविएणवि परोवयारेकसुण्णेण ? ॥ ३८ ॥ नाओ
जिणिंदधम्मो अकलंकं पालियं च सामण्णं । इण्हिं परपीडारक्खणम्मि मरणंपि किमजुत्तं ? ॥ ३९ ॥ इच्चाइ भावणं भाविऊण
सहिऊण वेयणं निच्चं । उप्पन्नो सुहभावो देवो सव्वट्ठसिद्धीए ॥ ४० ॥ तो धम्मघोसथेरेहिं जाणिउं चिरगयं तयं साहुं । तस्स
गवेसणहेउं पट्ठविया साहुणो निउणे ॥ ४१ ॥ कालगओत्ति गुरूणं आगंतूणं च साहियं तेहिं । पुव्वगए उवओगं दिंति तओ
तेऽवि संभंता ॥ ४२ ॥ सद्दाविऊण समणे समणीओऽवि य कहंति तं सव्वं । नागसिरीए कडुतुंबदाणप्पभिइं स पज्जंतं ॥ ४३ ॥
उप्पत्तिं च अणुत्तरसुरेसु साहंति तस्स धीरस्स । तो सव्वसाहुवग्गो नागसिरिं निंदए पावं ॥ ४४ ॥ संसंति साहुचरियं विण्णायं
तं च सयललोयम्मि । तो धिक्कारो सव्वत्थ पसरिओ तीएँ पावाए ॥ ४५ ॥ नाओ दियरेहिं भत्तुणा य अह एस वइयरो तीए ।
निब्भच्छिऊण बहुयं तो सा सगिहाओ निच्छूढा ॥ ४६ ॥ अह धिक्कारिज्जंती निच्छुब्भंती य सयलठाणेसु । मच्छीहिं भिणिभिणं-
ती हम्मंती डिंभसत्थेहिं ॥ ४७ ॥ थुक्कारिज्जंती सव्वाहिंपि निलयं कहंपि अलहंती । सा सव्वाए नयरीइ भमइ भिक्खं अइदुहत्ता
॥ ४८ ॥ अह सोलसरोगेहिं इहेव जम्मम्मि पीडिया तिव्वं । अणुहविऊणं दुक्खं उप्पन्ना छट्ठपुढवीए ॥ ४९ ॥ मच्छाइभवंतरिया

गुरुसमीवम्मि ॥ १५ ॥ आलोइयपडिकंतो पडिग्गहं जा गुरूण दंसेइ । तो असुहगंधओ तं गुरूहिं विसतुंबयं नायं ॥ १६ ॥ तो भणिओ धम्मरुई संभंतेहिं गुरूहिं कट्ठमहो । मारेइ भुत्तमेत्तं ता चयसु इमं महाभाग ! ॥ १७ ॥ अन्नं सुद्धाहारं तु गिण्हिउं तं करेसु पारणयं । इच्छंति भणेऊणं थंडिलभूमिं गओ सोऽवि ॥ १८ ॥ सुसिणिद्धतुंबयाओ तओ अहो तेण बिंदुओ एक्को । गहिऊणं परिखित्तो कहंपि जा थंडिले सुद्धे ॥ १९ ॥ ता तत्थ आगयाइं गंधेण पिवीलियासहस्साइं । जा कावि तत्थ लग्गइ पिवीलिया मरइ सा सव्वा ॥ १९ ॥ असमंजसं तयं पासिऊण जीवाण घायणनिमित्तं । तो धम्मरुई चिंतइ उच्छलियअउव्वगुरुविरिओ ॥ २१ ॥ जइ इक्कबिंदुणा इत्तियाण जंतूण होइ वाघाओ । ता सव्वपरिच्चाए न नज्जए किंपि इह होही ॥ २२ ॥ रक्खेऊणं य एक्कं अप्पाणं एत्तियाण वहहेऊ । को होइ किर सयण्णो असासए जीवलोयंमि ? ॥ २३ ॥ मरियव्वं चावस्सं मएवि कइयावि कहवि ता इण्हिं । इत्तियजीवाणं रक्खणम्मि तं जुज्झए मज्झ ॥ २४ ॥ वयणंपि न महरिसिणो जंपंति परस्स पीडसंजणयं । काएण कहमहं पुण करेमि मुणिऊण पावमिणं? ॥ २५ ॥ नियपाणेहिवि धीरा एक्कंपि परं दुहाओ मोयंति । मह पुण विवरीयमिणं निव्वडइ इमं कुणंतस्स ॥ २६ ॥ तम्हा अधुवेण असारएण देहेण खलसहावेण । सुपुरिससेवियं गुणमयं च मग्गं पवज्जामि ॥ २७ ॥ इय चिंतिऊण मुहपोत्तियं च पडिलेहिऊण स महप्पा । नियदेहकुट्ठए पक्खिवेइ विसतुंबयं सव्वं ॥ २८ ॥ ताम्मि य परिणममाणे देहे जा वेयणा समुच्छलिया । सा कहिउंपि न तीरइ सहिउं पुण दुक्करं चेव ॥ २९ ॥ तो वेयणाइविहुरं अप्पाणं जाणिऊण सो साहू । एगंतमणावाए पडिलेहइ थंडिलं सुद्धं ॥ ३० ॥ संथरइ दब्भसंथारयं च पलियंकएण उववि सिउं । तत्थऽरहंताईणं कयंजली संथवं कुणइ ॥ ३१ ॥ जेहिं भवचारयाओ करुणाइ विमोइओ तहा सक्खं । थेराण धम्मघोसाण ताण सुगुरूण

पाठसिद्धेव ॥ अथ सत्यवादिनो गुणमाह—

आराहिज्जइ गुरुदेवयं व जणणिव्व जणइ वीसंभं । पियबंधवोव्व तोसं अवितहवयणो जणइ लोए ॥ १४८ ॥

सुगमैव, इह सत्यवादो द्विधा-लोकोत्तरो लौकिकश्च, तत्राद्यसमर्थनार्थं तावदुदाहरणमाह—

मरणेऽवि समावडिए जंपंति न अन्नहा महासत्ता । जन्नफलं निवपुट्ठा जह कालगसूरिणो भयवं ॥ १४९ ॥

अक्षरार्थः प्रकट एव, के पुनरमी भगवन्तः कालकाचार्याः ? कथं च ते यज्ञफलं नृपेण पृष्टा ? इति, कथानकेनोच्यते—

कण्हतणुव्व सुसिरिया बहुनरसंतोसया सुविभया य । नयरी नामेण तुरुमिणित्ति भरहम्मि सुपसिद्धा ॥ १ ॥ जियसत्तू तत्थ निवो जलहिव्व नदीणभावमणुपत्तो । भद्दाए माहणीए सुओ य दत्तो तहिं वसइ ॥ २ ॥ विप्पोऽवि पियइ मज्जं रमई वेसासु कीलए जूयं । खुद्दो रुद्दो भीमो केवलदोसालओ सो य ॥ ३ ॥ ओलग्गिउं पयट्टो कहमवि सो अन्नया महीनाहं । उज्जुअयाए तेणवि दिट्ठो अइगुरुपसाएण ॥ ४ ॥ अह मेहेण व सित्तो एसो विसपायवोव्व वित्थरिओ । लुंटंतो पगईओ जाओ य कमेण सामंतो ॥ ५ ॥ तो भेयं दाऊणं संगहिया तेण सयलसामंता । रज्जंपि तओ गहियं अवहत्थेऊण जियसत्तुं ॥ ६ ॥ अथवा- उवयरमाणाणवि सज्जणाण विहडइ खलो खणद्धेणं । दुद्धाइदाणओ पोसिओऽवि डसइ च्चिय भुयंगो ॥ ८ ॥ अवयरइ निव्वियारेऽवि सज्जणे दुज्जणो हयसहावो । अमयमओऽवि मयंको गासिज्जए जं विहप्पेण ॥ ९ ॥ पीणेइ सप्पिणो जो य हुयवहो दहइ तंपि हु अणज्जो । अहवा को दुज्जणविलसियाण जाणिज्ज सीमंतं? ॥ १० ॥ निस्सारिऊण मुक्को अह जियसत्तूवि वयइ अन्नत्थ । एसो य कुणइ रज्जं जण्णे य जवावए बहुए ॥ ११ ॥ तस्स य

सेसासुवि सत्तमाइपुढवीसु । उववज्जिऊण एसा अणेगवाराओ तो कमसो ॥ ५० ॥ नाणातिरिएसु बहुं भमिउं संसारसागरं घोरं । सिरिसत्थवाहसागरदत्तस्स पुरीएँ चंपाए॥५१॥ धूयत्ताए जाया भद्दाए सत्थवाहघरिणीए । अइदुब्भगा सुरूवावि पुव्वदुकएण संपन्ना ॥ ५२ ॥ तत्तो भत्ताराईहिं उज्झिया गिण्हिऊण पव्वज्जं । सनियाणा उप्पन्ना सुरगणियत्ताइ ईसाणे ॥ ५३ ॥ तत्तोऽवि य चइऊणं कम्पिल्लपुरम्मि दुवयरायस्स । धूया जाया जिणवयणभाविया दोवई नामा ॥ ५४ ॥ पुव्वनियाणवसेणं सयंवरा पंचपंडवाणेसा । भज्जा जाया अह नारएण कुविएण कइयावि ॥५५॥ धायइसंडे भरहम्मि अवरकंकाइ पउमनाहस्स । रन्नो रूवाइगुणे कहिऊण हराविया एसा ॥ ५६ ॥ निच्चं चिय छट्ठतवं आयंबिलपारणं कुणंतीए । तत्थ य महासईए न खंडियं तीए नियसीलं ॥ ५७ ॥ अंतो छण्हं मासाण केसवेणं नियत्तिया एसा । जिणिऊण पउमनाहं ठिया तओ पंडुमहुराए ॥ ५८ ॥ कालेण जणइ पुत्तं गुणुत्तमं पंडुसेणनामंति । रज्जम्मि तम्मि ठविए पव्वइया पंडवेहिं समं ॥ ५९ ॥ पालियअकलंकवया उप्पन्ना बंभलोयकप्पंमि । तत्तो चइऊण पुणो महाविदेहम्मि सिज्झिहिइ ॥ ६० ॥ धम्मरुइचरियकहणप्पसंगओ दोवईए चरियंपि । कहियं लेसेण सवित्थरं तु नाएसु नायव्वं ॥ ६१ ॥ इति धर्मरुचिकथानकम् ॥

प्रदत्तः सोदाहरणः प्रथमव्रतपरिपालनोपदेशः, अथ द्वितीयव्रतविषयं तमभिधित्सुराह—

कोहेण व लोभेण व भएण हासेण वावि तिविहेण । सुहुमेयरंपि अलियं वज्जसु सावज्जसयमूलं ॥ १४६ ॥

सुगमैव, नवरं त्रिविधेत्युपलक्षणत्वात् त्रिविधं त्रिविधेनेत्यर्थः । कः पुनरलीकवादिनो दोष इत्याह—

लोएऽवि अलियवाई वीससणिज्जो ण होइ भुयगोव्व । पावइ अवण्णवायं पियराणं देइ उव्वेयं ॥ १४७ ॥

पाठसिद्धैव ॥ अथ सत्यवादिनो गुणमाह—

आराहिज्जइ गुरुदेवयं व जणाणिव्व जणइ वीसंभं। पियबंधवोव्व तोसं अवितहवयणो जणइ लोए ॥ १४८ ॥

सुगमैव, इह सत्यवादो द्विधा-लोकोत्तरो लौकिकश्च, तत्राद्यसमर्थनार्थं तावदुदाहरणमाह—

मरणेऽवि समावडिए जंपंति न अन्नहा महासत्ता। जन्नफलं निवपुट्ठा जह कालगसूरिणो भयवं ॥ १४९ ॥

अक्षरार्थः प्रकट एव, के पुनरमी भगवन्तः कालकाचार्याः? कथं च ते यज्ञफलं नृपेण पृष्टा? इति, कथानकेनोच्यते—

कण्हतणुव्व सुसिरिया बहुनरसंतोसया सुविभया य। नयरी नामेण तुरुमिणित्ति भरहम्मि सुपसिद्धा ॥ १ ॥ जियसत्तू तत्थ निवो जलहिव्व नदीणभावमणुपत्तो। भद्दाए माहणीए सुओ य दत्तो तहिं वसइ ॥ २ ॥ विप्पोऽवि पियइ मज्जं रमई वेसासु कीलए जूयं। खुद्दो रुद्दो भीमो केवलदोसालओ सो य ॥ ३ ॥ ओलग्गिउं पयट्टो कहमवि सो अन्नया महीनाहं। उज्जुअयाए तेणवि दिट्ठो अइगुरुपसाएण ॥ ४ ॥ अह मेहेण व सित्तो एसो विसपायवोव्व वित्थरिओ। लुंटंतो पगईओ जाओ य कमेण सामंतो ॥ ५ ॥ तो भेयं दाऊणं संगहिया तेण सयलसामंता। रज्जंपि तओ गहियं अवहत्थेऊण जियसत्तुं ॥ ६ ॥ अथवा- उवयरमाणाणवि सज्जणाण विहडइ खलो खणद्धेणं। दुद्धाइदाणओ पोसिओऽवि डसइ च्चिय भुयंगो ॥ ८ ॥ अवयरइ निव्वियारेऽवि सज्जणे दुज्जणो हयसहावो। अमयमओऽवि मयंको गासिज्जए जं विडप्पेण ॥ ९ ॥ पीणेइ सप्पिणो जो य हुयवहो दहइ तंपि हु अणज्जो। अहवा को दुज्जणविलसियाण जाणिज्ज सीमंतं? ॥ १० ॥ निस्सारिऊण मुक्को अह जियसत्तूवि वयइ अन्नत्थ। एसो य कुणइ रज्जं जणे य जवावए बहुए ॥ ११ ॥ तस्स य

माउलो विहरमाणओ कहवि तत्थ संपत्तो । कालगसूरी नामा आयरिओ बहुगुणग्घविओ ॥ १२ ॥ नियधम्मेण य तुट्ठो राया गंतूण ताण पासम्मि । पुच्छइ मामग ! साहसु जण्णाणं किं फलं होइ ? ॥ १३ ॥ तो तेहिं चिंतियं ताव जिणमयं अन्नहा न कहियव्वं । अवितहकहणा उण कम्मबंधमेसो बहुं कुणइ ॥ १४ ॥ तो विक्खेवो जुत्तो एत्थंति विचिंतिऊण तो भणियं । धम्मफलं नरवइ! सग्गापवग्गात्ति सुपसिद्धं ॥ १५ ॥ पुच्छामि न धम्मफलं जण्णफलं कहसु तेण इति भणिए । पुणरवि पभणइ सूरी पंथो निरयाणऽवियऽहम्मो ॥ १६ ॥ कौतुकमेयं पुच्छइ जण्णफलं कहसु आह तहवि गुरू । असुहाणवि कम्माणं उदओ तिरियाइदुहजणओ ॥ १७ ॥ एवं भणिओऽवि पुणो तं पुच्छइ सो निवो पयंपंतो । साहिक्खेवं वयणं तत्तो सूरीवि चिंतेइ ॥ १८ ॥ रक्खंति कम्मबंधं परस्स सक्कं बुहावि नासक्कं । एसो य निवो भवियव्वयाइ आलिंगिओ नूणं ॥ १९ ॥ ता साहेमि जहत्थंति चिंतिउं भणइ नरवर ! सुणेसु । पसुघायकारणेणं जण्णाण फलं महानरगा ॥ २० ॥ यतः प्रोक्तं व्यासेन- 'ज्ञानपालिपरिक्षिप्ते, ब्रह्मचर्यदयाम्भसि । स्नात्वाऽतिविमले तीर्थे, पापपंकापहारिणि ॥ १ ॥ ध्यानाग्नौ जीवकुंडस्थे, दममारुतदीपिते । असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तमम् ॥ २ ॥ कषायपशुभिर्दुष्टैर्धर्मकामार्थनाशनैः । शममंत्रहतैर्यज्ञं, विधेहि विहितं बुधैः ॥ ३ ॥ छिन्द्धि तृष्णालतागुल्मं, भिन्द्धि संसारपंजरम् । सदानन्दसुखं नित्यं, ततो व्रज परंपदम् ॥ ४ ॥ प्राणिघातात्तु यो धर्ममीहेत मूढमानसः । स वांछति सुधावृष्टिं, कृष्णाहिमुखकोटरात् ॥ ५ ॥' इत्यादि, अह कुविओ सो राया पभणइ नरयम्मि मज्झ गंतव्वे । को पच्चओत्ति ? साहसु भो पव्वइयग ! विचिंतेउं ॥ २१ ॥ तो भणियं सूरीहिं तुममेत्थवि तत्थ तिह्लकुंभीए । नवरं सत्तमदियहे सुणएहि समं खविज्जिहिसि ॥ २२ ॥ को पच्चओ इहंपिहु? तो भणियं सूरिणा तुह मुहम्मि । पढमं चिय तत्थ दिणे असुइं कत्तोऽवि

फारमंतमरणाओ । तवनियमदाणओ तह सुमिणो पाओऽवि मंदफलो ॥ ४७ ॥ अथ रिष्टानि-दाहिणकरनिबडकं वामहत्थंगुलीण पव्वंगा । जस्सारुणा न दीसंति तस्स मरणं लहुं मुणसु ॥ ४८ ॥ मुहदेहवणाईसुं जस्स अणिट्ठो अईव इट्ठो वा । गंधो उच्छलइ उण अहेउओ सोऽवि लहु मरिही॥४९॥ सोम्हेवि हु अनिमित्तं सहसच्चिय सीयलत्तणं अंगे। निट्ठूयस्स व नीरे निमज्जणं व यमंसो य ॥ ५० ॥ वणरंगपउमयुद्धाण कद्दमनीराइएसु वत्थूसु । सूराईणमदंसण दिणेवि ताराण उवलंभो ॥ ५१ ॥ इंदधणुविज्जुदंसणमसंभवं तह य गज्जिसवणं च । दंसणममरविमाणाइयाण तह तूररवसवणं ॥ ५२ ॥ देहम्मि पउरमच्छियविलग्गणं पिट्ठओ य तम्ममणं । वेज्जोसहप्पओसो भायणभंसो य अणवरयं ॥ ५३ ॥ करपिहियकन्न.निग्घोसअसवणं एवमाइरिट्ठेहिं । पच्चासन्नो मच्चू विजाणियव्वं सुबुद्धीहिं ॥ ५४ ॥ एवमपरैरपि प्रकारैर्भक्तप्रत्याख्यातविषयं पर्यालोचनीयं । अथातीन्द्रियार्थपरिज्ञानं तथाविधं न किञ्चिदस्ति तर्हि वर्षामृत्तमार्थमसौ कार्यते, तदा हि दण्डिकाः स्वस्थानस्थास्तिष्ठन्ति, ततः प्रायो विरुद्धराज्यासम्भवान्नगरादीनि स्वस्थानि भवन्तीति भावः । इत्युक्तमाभोगनद्वारम् ८ । 'अन्ने' त्ति अन्यस्मिन् साधौ भक्तपरिज्ञानार्थं समुपस्थिते विधिर्वक्तव्य इत्यर्थः, इदमुक्तं भवति यद्येककाल द्वौ साधू भक्तपरिज्ञानार्थमुपस्थितौ तदैकः संलेखनां करोति अपरस्तु भक्तप्रत्याख्यानं कार्यते, तृतीयादयोऽपि च यद्युपतिष्ठन्ति तदा तद्योग्याया अपि निर्यामकादिसामग्र्याः सद्भावेऽप्यंगीक्रियन्ते, अन्यथा आर्त्तध्यानादिसम्भवान्निषिध्यन्ते, यश्च भक्तप्रत्याख्याता अंगीकृतः तिष्ठति स यदि कथंचित् प्रत्याख्यानाद्भज्यते जने च भक्तप्रत्याख्याततया ज्ञातो दृष्टश्च भवति तदा यः संलेखनां कुर्वंस्तिष्ठति स एव तत्स्थाने झगित्येवोपावेश्यते चिलिमिली चान्तरे बध्यते, यैश्च पूर्वो ज्ञातो दृष्टश्च ते यदि वन्दनार्थमागच्छन्ति तदा तेषां पाश्चात्यो न दर्श्यते, किन्तूच्यते-द्वार-

स्थिता एव वन्दध्वमित्याद्यागमोक्ता व्यवस्थेति गतमन्यद्वारमिति ९। 'अणपुच्छ' त्ति स्वगणमनापृच्छयाचार्येण भक्तपरिज्ञोद्यतः सहसैव नांगीकर्त्तव्यो, गच्छस्य तस्य च बृहदसमाधिप्रसंगादिति प्रतीतमेवेत्यनापृच्छाद्वारम् १० । अथ परीक्षणं परीक्षा, सा चागन्तुकस्याचार्येण गच्छसाधुभिश्च कर्त्तव्या, किमसौ स्वप्रतिज्ञानिर्वाहनिबन्धनैर्जितेन्द्रियत्वादिभिर्गुणैर्युक्तो न वेति, तेनापि चागन्तुकेन तेषां साधूनां परीक्षा विधेया–किमेते परिणतजिनवचना न वा ?, तथाहि-भक्तं प्रत्याचिख्यासुः समागतमात्रोऽपि तान् वक्ति-कलमशालिदुग्धादिकममुकममुकं च वस्तु मम भोजनार्थं समानयत यूयं, ततश्चाहो जितेन्द्रियः साधुर्भक्तप्रत्याख्यानार्थमागतस्तिष्ठतीत्यादि सोल्लुंठवचनान्याभिधाय यदि ते हसन्ति कुप्यन्ति वा तदाऽभावितजिनवचना एते मम समाध्युत्पादका न भविष्यन्तीत्याकलय्य परिहर्त्तव्याः, 'अथेच्छाम' इत्युक्त्वा तत् प्रतिपद्यन्ते, तदा भावितजिनवचनत्वादंगीकर्त्तव्याः, आनीते च कलमशाल्यादौ सुन्दरमिदमहो भुञ्जामीति गृद्धो यद्यसौ भोक्तुमारभते तर्हि यदा आहारे गृद्धिं त्यक्ष्यति तदा भक्तपरिज्ञायोग्यो भविष्यतीत्याद्युक्त्वा अजितेन्द्रियत्वादागन्तुकस्तैरपि साधुभिः परिहर्त्तव्यः, अथैतद् वक्ति, यदुत–पूर्वगृहीताहारैर्यद्यहं न तृप्तस्तत् किमिदानीमनेन तुच्छेनाहारमात्रेण तृप्तिं प्राप्स्यामि ?, तस्माद्यद्यपि मया कथंचिदिदमानायितं तथापि न भोक्ष्यामीत्यादि तदा योग्यत्वात् स्वीकर्त्तव्यः, आचार्येणाप्यागन्तुकः कर्षितशरीरः प्रत्यक्षमुपलभ्यमानोऽपि परीक्षार्थमित्थं वक्तव्यो, यथा देवानुप्रिय! संलेखना त्वया सम्यक् कृता न वेति?, ततश्च कोपादंगुलीर्भक्त्वा पश्याचार्य ! अद्यापि यदीह मांसशोणितादिकं किञ्चिद्वीक्ष्यते, हन्त! किमीदृशशरीरमपि मां कृतसंलेखनं न वेत्सि येनेत्थं पृच्छसि, ततश्च सूरिभिः-किमपरेण ? द्रव्य(भाव)संलेखनैव कर्त्तव्या, सा च त्वया अद्यापि न कृता, परमशत्रोः कोपस्यैवेत्थमसंलिखितत्वादित्याद्युक्तः सन् यदि स दोषप्रतिपत्तिपूर्वकं सम्यग् मिथ्या-

दुष्कृतं दत्त्वा क्षमयन् (स्वीकर्त्तव्यः) परंश्च परीक्षा वक्तव्येत्यवसितं परीक्षाद्वारम् ११॥ आलोचनमालोचनेत्यर्थः, सा च तस्मिन् समये विशेषतः सम्यक् प्रव्रज्याग्रहणकालादारभ्य दातव्या, तस्यां च दत्तायां ये गुणास्तदप्रदाने तु ये दोषास्तद्ग्रहणविधिश्चेत्यर्थमादिशब्दं पूर्वमालोचनाद्वारेण भणितं द्रष्टव्यम्, द्वारम् १२॥ 'ठाण' त्ति, प्रशस्तशब्दः प्रत्येकमभिसम्बध्यते, ततश्च प्रशस्ते स्थाने भूभागलक्षणेऽसावनशनविधिं कार्यते, इदमुक्तं भवति-यत्र गीतनृत्यादीन्यासन्नानि न प्रवर्त्तन्ते, कल्पपालवंचिकरजकच्छिपकचर्मकारकुम्भकारशालादिशालाश्च यत्रासन्ना न भवन्ति, राजमार्गप्रख्यातिप्रासादयक्षगृहादिप्रत्यासत्तिश्च यत्र न भवति, यच्च आरामोदकाद्यासन्नं तत् स्थानं वर्जनीयम्, ध्यानव्याघातजुगुप्साक्षुद्रोपद्रवादिदोषसम्भवात्, द्वारं १३। तत्राप्युद्गमादिदोषरहितं प्रशस्तं चतुःशालं त्रिशालं वा विस्तीर्णं वसतिद्वयं गृह्यते, तत्रैकस्यां भक्तप्रत्याख्याता ध्रियते, अन्यस्यां च साधवो भोजनादिक्रियां कुर्वते, अन्यथा भक्तगन्धादिना तत्प्रत्याख्यातुस्तदभिलापः स्याद्, अपरिणतादीनां तत्समाधिभक्तदानदर्शनादौ बहुदोषसम्भवादिति, द्वारम् १४। 'निज्जवग'त्ति पार्श्वस्थावसन्नत्वादिदोषदुष्टा अगीतार्थाश्च निर्यापका न कर्त्तव्याः, किन्तु कालौचित्येन गीतार्थतादिगुणयुक्ताः, ते चाष्टचत्वारिंशत्, तद्यथा-ये अनशनिनं उद्वर्त्तयन्ति ते चत्वारः ४ ये चाभ्यन्तरद्वारमूले तिष्ठन्ति तेऽपि चत्वारः ८, एवं संस्तारककर्त्तारः १२ तस्यैव विदितवस्तुतत्त्वस्यापि धर्मकथकाः १६ वादिनः अग्रद्वारमूलावस्थायकाः २८ तदुचितभक्तानयनयोग्याः ३२ उच्चारपरिस्थापकाः ३६ प्रश्रवणपरिस्थापकाः ४० बहिः धर्मकथकाः ४४ प्रत्येकमेकैकश्चतसृष्वपि दिक्षु क्षुद्रोपद्रवनिवारणाय चत्वारः सहस्रयोधिनो महामल्लाः ४८, एवमेतेषु द्वादशसु स्थानेषु प्रत्येकं चत्वार इति सर्वेऽप्यष्टचत्वारिंशत्, अन्ये तूच्चारप्रश्रवणपरिस्थापकान् मिलितानपि चतुरोऽभिधाय ततो दिक्षु प्रत्येकं द्वौ द्वावित्यष्टौ महायोधान् मन्यन्त इत्येवमष्टचत्वारिंशतं प्रतिपाद-

यन्ति, अथैतावन्त एते न लभ्यन्ते तर्ह्येकैकहान्या तावद्वक्तव्यं यावदवश्यं द्वौ निर्यापकौ कर्त्तव्यौ, तत्रैको भक्तपानकाद्यानयनार्थं पर्यटति, अपरस्तु परिज्ञिन एव समीपमशून्यं करोतीति द्वारम् १५। 'दव्वदायणा चरमे' त्ति चरमे-पर्यन्तवर्तिनि, मरणकाल इत्यर्थः, तत्र मुमूर्षोः प्रायेण भोजनाभिलाषः समुच्छलति, अतस्तस्य समाध्युत्पादनार्थं सर्वाण्यपि प्रत्येकं स्तोकस्तोकानि दधिदुग्धघृतपक्वान्नशालिदालिव्यञ्जनादीनि द्रव्याणि दर्श्यन्ते, यानि च तस्य प्रतिभासन्ते तानि विशेषतो दर्श्यन्ते, यदि चैषणीयानि न लभ्यन्ते तदा पंचकादिपरिहाण्या अन्यान्यपि, आनीतानि यद्यसौ भुंक्ते तदा को गुणः ?, उच्यते, तस्याहारतृष्णाव्यवच्छेदः, तस्मिंश्च सति स्वस्थो वैराग्यमुपगत आहारस्यासारतादिस्वरूपं परिभावयन् सुखेनैव तं परित्यजति, अन्यथा त्वार्त्तध्यानादयो दोषा इति द्वारम् १६ । 'हाणि'त्ति यद्यानीतं तदसौ भुंक्ते तदा द्वितीयदिने परिहीयमाणं स्तोकमानीयते, यच्च तस्य प्रियं तद्विपरीतमन्यत् किमप्यानीयते, प्रार्थयमाणस्य च त्वत्प्रियं नाद्य लब्धमित्युत्तरं क्रियते, आहारगृद्धिव्यवच्छेदिनी च देशना क्रियते, तृतीयदिनेऽप्येष एव विधिः, नवरं स्तोकतरमानीयते, ततः परं सर्वथैव न किञ्चिदानीयते, देशनादिभिश्च प्रतिबोध्यते, अथ पराभग्नत्वात् गृद्धो न प्रतिबुध्यते तदा पूर्वमेवान्यत्रद्वारे निर्णीतो विधिराश्रीयत इति १७। 'अपरितंतात्ति' अपरितान्तैः-अनिर्विण्णैः प्रतिचरकैर्निर्जरार्थिभिर्यथाबलं यथापरिज्ञानं च सर्व्वं तद्विषयं कृत्यं विधेयमित्यर्थः १८ द्वारम् । 'निज्जर'त्ति परिज्ञिनः परिपार्श्वगानां च समक्षं गुरुणा कर्म्मनिर्जराप्ररूपणा कार्या, यथा "कम्ममसंखिज्जभवं खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मिवि जोगे सज्झायम्मी विसेसेण ॥ १ ॥" एवं स्वाध्यायस्थाने कायोत्सर्गवैयावृत्त्यालापेनेत्थमेव गाथाद्वयं पठनीयम्, ततश्च "कम्ममसंखिज्जभवं खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मिवि जोगे विसेसओ उत्तिमट्ठम्मि ॥ १ ॥"

तदेवमुत्तमार्थस्यानशनलक्षणस्य सर्वोपरि निर्जराहेतुतया परममुनिभिः पठितत्वात् सम्यगेवोद्यतैरयं विधेय इति । द्वारम् १९ । 'संथार'त्ति, संस्तारकविधिर्वक्तव्यः, तत्र भूमौ शिलातले वा अस्फुटिते सोत्तरपट्टः संस्तारकश्चास्तीर्यते, तत्रोपविष्टः शयितो वा स्वसमाधिना तिष्ठति, अथैवं स्थातुं न शक्नोति तदैकखण्डे तदलाभे द्विखण्डादिके पट्टे संस्तारक आस्तीर्यते, संस्तारकेऽपि यदि समयप्रसिद्धे स्थातुं न शक्नोति तदा एकवृद्ध्या त्र्यादयः कल्पा आस्तीर्यन्ते यावत् पृष्ठिभंगादिवेदनायामन्यथा समाध्यसम्भवे तूलिरास्तीर्यत इति, द्वारम्२० । उद्वर्त्तनादीनीति, आदिशब्दात् परावर्त्तनबहिःप्रवातार्थं निस्सारणादिपरिग्रहः, एतानि च उद्वर्त्तनादीनि कोमलकराणां स्थिरगम्भीराणां समर्थानां कृतयोगिनां पार्श्वात् कार्यन्ते, प्रथमं तावत् सति सामर्थ्ये पानकाद्यानयनार्थं स्वयमेव गच्छति, ततश्चोपाश्रयस्थ एव संचरणादिक्रियाः स्वयमेव करोति, तदसामर्थ्येऽनन्तरोक्तरूपाः साधव उपविष्टं सञ्चारयन्ति, ततश्च सुप्तमपि, संस्तारकस्थितस्य च समाध्युत्पादनार्थं देशनां कुर्वन्ति,२१। 'सारेऊण य कवयं' ति कवचम्-अंगरक्षको, यथैतद्ग्रहणे खड्गतोमरादिप्रहारा न गण्यन्ते एवं परिज्ञिना समाधिनिमित्तं किञ्चिदाहारे गृहीते प्रहारकल्पाः क्षुत्पिपासाअरतिप्रभृतयः परीषहा न गण्यन्ते, पराजीयन्त इत्यर्थः, ततश्च सारयित्वा कवचमिव कवचम् अहारः समाधिमात्रोत्पादनार्थं परिज्ञिनो दीयते, इदमुक्तं भवति-प्रत्याख्यातेऽप्याहारे परीषहबाधितो यद्यसौ कथमप्याहारं प्रार्थयते तदा मा कथंचिदसौ प्रत्यनीकदेवतयाऽधिष्ठितो याचत इति परीक्षार्थं प्रथमं तावत् सारणा क्रियते, तद्यथा-कोऽसि त्वं ?, गीतार्थः, इदानीं दिनं वर्त्तते रात्रिर्वेत्यादि, एवं सारणायां कृतायां यद्यसौ प्रस्तुतं ब्रवीति तदा ज्ञायते न देवताधिष्ठितः, किन्तु परीषहबाधित इति ज्ञात्वा समाध्युत्पादनार्थं किञ्चिदाहारो दीयते, ततस्तद्बलेन ( परीषहानीकं विजित्य सम्यगाराधयति मरणं। 'चिंध'न्ति ) कालगतस्य साधोश्चिह्नं कर्त्तव्यं,

तच्च द्विधा-शरीरत उपकरणतश्च, तत्र शरीरतस्तावद्भक्तं प्रत्याचिख्यासोः प्रथममेव लोचः क्रियते, उपकरणतस्तु कालगतस्यापि सन्निधाने मुखवस्त्रिकारजोहरणचोलपट्टकलक्षणमुपकरणं मुच्यते एव येन दिवमपि गतः साधुरूपं दृष्ट्वा सम्यक्त्वं प्रतिपद्यते, अन्यथा सुराष्ट्राश्रावकवन्मिथ्यात्वगमनसम्भवात्, अपरं वह्निमन्तरेण परिष्ठापने चौरैः कोऽप्ययं गलमोटनादिना विनाशितः इत्याशंकया ग्रामाणां राजनिग्रहादयो दोषा इति। द्वारं २३। व्याघाते-भक्तप्रत्याख्यानपराभग्नत्वलक्षणे याञ्जा संलेखनाकरणप्रवृत्तस्य द्वितीयस्य पूर्वोक्तविधिना तत्स्थाने उपदेशनार्थं क्रियते, अथ नास्त्यसौ तदा समयोक्तो विधिरत्र द्रष्टव्यः, एतच्च सर्वं भक्तपरिज्ञायां-भक्तप्रत्याख्यानलक्षणे मरणे द्रष्टव्यं, पादपोपगमनेंगिनीमरणयोस्तु स्थानान्तरोक्तो विधिर्द्रष्टव्यः, प्रतीतश्च, एषां चायं विषयविभागः "सव्वाओ अज्जाओ सव्वेऽवि य पढमसंघयणवज्जा। सव्वे य देसविरया पच्चक्खाणेण उ मरंति ॥ १ ॥" इति गाथात्रयार्थः ॥ उक्तं सपराक्रमं द्विधा अपि। अपराक्रमं तदभिधित्सुराह—

अपरक्कमु बलहीणो निव्वाघाएण कुणइ गच्छम्मि। वाघाओ रोगविसाइएहिं तह विज्जुमाईहिं ॥४८७॥

अपराक्रमः क इत्याह-बलहीनः, परगणं गन्तुमशक्त इत्यर्थः,स एवंभूतो निर्व्याघातेन विद्युद्व्याघ्रसिंहाद्युपद्रवाभावरूपेण करोत्युत्तमार्थं स्वगच्छेऽपि, न तु परगणं गच्छतीति भावः, अथ व्याघातस्वरूपं स्वयमेव व्याचिख्यासुराह--'वाघाओ रोगे'त्यादि, अत्र अनाशुकारिणि रोगे अद्यापि बलयुक्तः परगणमपि गच्छाति, बलहीनस्तु स्वगच्छेऽपि वर्त्तते, आशुकारी तु क्षणमात्रेणैवोपसंहारकारी शूलादिको रोगो विद्युद्व्याघ्रादिभयं च यत्रैव स्थितस्योपजायते तत्रैवोत्तमार्थं प्रतिपद्यत इति गाथार्थः ॥

अथ पण्डितमरणस्यैव माहात्म्यमुत्कीर्त्तयन्नाह—

एक्कं पंडियमरणं छिंदइ जाईसयाई बहुयाई । एक्कंपि बालमरणं कुणइ अणंताई दुक्खाई ॥ ४८८ ॥

सुगमेव । पण्डितमरणे चांगीकृते धीरतैव कर्त्तव्या, न वैक्लव्यं, कुत इत्यत्र युक्तिमाह—

धीरेणऽवि मरियव्वं काउरिसेणावि अवस्स मरियव्वं । तो निच्छियम्मि मरणे वरं खु धीरत्तणे मरिउं ॥४८९॥

सुबोधा ॥ ननु पादपोपगमनादिविबुधमरणेन मृताः प्राणिनः क गच्छन्तीत्याह—

पाओवगमणइंगिणिभत्तपरिण्णाइविबुहमरणेण । जंति महाकप्पेसुं अहवा पाविंति सिद्धिसुहं ॥ ४९० ॥

अनिगूढार्था ॥ सिद्धावपि किं सौख्यं यदर्थमिदं कष्टमाचेष्टयत इत्याह—

सुरगणसुहं समग्गं सव्वद्धापिंडियं जइ हविज्जा । नवि पावइ मुत्तिसुहं ऽणंताहिवि वग्गवग्गूहिं ॥४९१॥

सुरगणस्य-सर्वस्यापि देवसंघातस्य सम्बन्धि यदतीतानागतवर्त्तमानकालभावि समग्रं-समस्तं सुखं तदपि सर्वाद्धापिंडितं-सर्वकालसमयराशिना गुणितं यदि भवेद्, उपलक्षणं चेदं, ततः पुनरप्यनन्तगुणं क्रियते यावत् समस्तलोकालोकनभःप्रदेशसंख्या-स्तद्राशयः कृत्वा एकत्र मील्यन्ते, तथाऽप्येवमपि प्रकर्षगतमिदममरसुखं सिद्धिसुखं कर्मतापन्नं न प्राप्नोति, अस्यापि राशेर्वर्ग-स्तस्यापि पुनर्वर्गः एतस्यापि पुनर्वर्ग इत्येवमनन्तैरपि वर्गैर्वर्गितं सन्न तत्तुल्यं भवतीति गाथार्थः ॥ किंच-देवादीनां तत्त्वतो दुःखित-त्वात् सुखं नास्त्येव, किन्तु सिद्धा एव परमार्थसुखिन इति दर्शयति—

दुक्खं जरा विओगो दारिद्दं रोयसोयरागाई । तं च न सिद्धाण तओ तेच्चिय सुहिणो न रागंधा ॥४९२॥

दुःखं, किमुच्यते इत्याह जराऽभीष्टविप्रयोगः दारिद्र्यरोगशोकरागादयः, दुःखहेतुत्वात् कारणे कार्योपचाराद् जरादयो दुःखं,

तच्चैवंभूतं दुःखं सिद्धानां नास्तीति, ततस्त एव सुखिनो, न रागान्धा देवादयः, अयं चार्थश्चरणद्वारभवविरागादिद्वारेषु भावितप्राय इति गाथार्थः ॥ यत एवं ततः किमित्युपसंहरन्नाह—

निच्छिन्नसव्वदुक्खा जाइजरामरणबन्धणविमुक्का । अव्वाबाहं सुक्खं अणुहुंती सासयं सिद्धा ॥ ४९३ ॥

सुबोधा ।

असकृदपि मृतानामादिमुक्ते भवेऽस्मिन्, न खलु गदितरूपः प्रापि पांडित्यमृत्युः ।
तदपि मनसि मत्वा प्राप्य जैनेन्द्रपादान्, भजत विबुध मृत्युं कर्त्तनं मृत्युवल्ल्याः ॥ १ ॥

## इति श्रीहेमचन्द्रसूरिविरचितोपदेशमालाविवरणे भावनाद्वारे परिज्ञानलक्षणं प्रतिद्वारं समाप्तम्

अथ प्रकरणोपसंहाराधिकार उच्यते, तत्र तावदनन्तरोक्तार्थमेवाश्रित्याह—

संतेऽवि सिद्धिसुक्खे पुव्वुत्ते दंसियम्मि य उवाए । लद्धम्मि माणुसत्ते पत्तेऽवि जिणिंदवरधम्मे ॥४९४॥
जं अज्जवि जीवाणं विसएसु दुहासवेसु पडिबंधो । तं नज्जइ गरुयाणवि अलंघणिज्जो महामोहो ॥४९५॥

अनन्तरोक्तस्वरूपे सत्यपि सिद्धिसौख्ये पूर्वोक्ते चाभयप्रदानादिके दर्शितेऽपि तत्प्राप्त्युपाये लब्धे मानुषत्वे प्राप्तेऽप्यप्राप्तपूर्वे जिनेन्द्रवरधर्म्मे यदद्यापि जीवानां विषयेषु दुःखोपादाननिबन्धनभूतेषु प्रतिबन्धो दृश्यते तज्ज्ञायते गुरूणामपि प्रायोऽलंघनीयो महामोह इति गाथाद्वयार्थः ॥ न केवलं मोहनीयादिकर्म्मविहता जन्तवो विषयप्रतिबन्धं मुक्त्वा गुणान्न प्रतिपद्यन्ते, अपि

तु लब्धानपि विशुद्धगुणान् परित्यज्य केचिद् विषयेषु रमन्त इति दर्शयन्नाह—

नाऊण सुयबलेणं करयलमुत्ताहलं व भुवणयलं । केऽवि निवडंति तहविहु पिच्छसु कम्माण बलियत्तं ॥४९६॥

उत्तानार्थो । अपरे पुनः किमित्याह—

एगंपि पयं सोउं अन्ने सिज्झंति समरनिवइ व्व । संजायकम्मविवरा जीवाण गई अहो विसमा ॥४९७॥

इयमपि सुबोधा । नवरं समरनृपतिकथानकमुच्यते । समरनृपतिकथानकम्—

मायंदी नाम पुरी सियपासाउच्छलंतधवलपडा । जा निच्चज्जुण्णकलियं व नहयलं कुणइ सयकालं ॥ १ ॥ अभिचंदो तत्थ निवो दीसइ सूरोऽवि जो सया सोमो । सिवमग्गपयट्टो सुट्ठिओवि जिणसासणपुरम्मि ॥ २ ॥ धम्मं चिय बहु मन्नइ जो पुरिसत्थेसु अट्ठ अन्नुहेहिं । काओवलेसु चित्तं रयणं चिय गिण्हए विबुहो ॥ ३ ॥ सरिसं च पयत्थत्तं कहवि हु लोयम्मि जइवि हु पसिद्धं । तहवि न पावइ महिमं परमाणू कणयसेलस्स ॥ ४ ॥ अह सो परिवालंतो रज्जं नयविक्कमेहिं सव्वत्थ । विहियसद्धम्मकज्जो गमेइ दियहाइं सोक्खेण ॥ ५ ॥ ततश्चान्यदा बहिरश्ववाहनिकायां निर्गतोऽयमतीव प्रभूततुरगान् वाहयित्वा परिश्रान्तश्चलितो मनोनन्दनगुद्यानं लक्ष्यीकृत्य विश्रामहेतोः, यावच्च क्षणमेकमुपसर्प्पति तावत् सहसैवाप्यायितः सुरभिशीतलसमीरणेन समानन्दितः सुरसंघातोत्पातनिपातदर्शनेन परितुष्टस्तदीयस्तुतिरवश्रवणेन प्रीणितः प्रबन्धप्रवृत्तधर्मकथाध्वानश्रवणपूरणेन, ततः प्रहृष्टचित्तेन पृच्छता ज्ञातं कुतश्चिद्, यदुत सुप्रभनामा भगवान् केवलीह समवसृतः, ततो वनमयूर इव नवजलददर्शने प्रहृष्टहृदयो यावत् केवलिनोऽनतिदूरवर्त्तिनं प्रदेशमासादयति तावदधरयन्तं कान्त्या कनकप्रभां अपहस्तयन्तं मुखेन शशि-

मण्डलं उपहसन्तं रूपलावण्यलक्ष्म्या श्रीनन्दनमालिंगितं सर्वाङ्गमुपशमश्रिया प्रत्यक्षमिव संयमं मूर्त्तमिव तपोराशिं अध्यक्षमिव सम्यग्ज्ञानसन्तानं सूर्यमण्डलाभिनिविष्टदृष्टिं समुच्छ्रितभुजयुगलं क्वचित् परमाक्षरे लीनं सज्जाक्षमप्यदर्शकं पटुश्रवणमप्यनाकर्णितशब्दं कुर्वन्तमिव नयनयोरमृतवृष्टिं प्रकृष्टध्यानोपगतं कंचित् परममुनिमद्राक्षीत्, ततश्च तद्दर्शनतोऽतीव कृतार्थमात्मानं मन्यमानोऽवतीर्य तुरङ्गमात् क्षितितलमिलज्जानुकरतलोत्तमांगः प्रणामं कृतवान्, तेन च मुनिना ध्यानप्रकर्षवशाद्वन्द्यमानोऽपि नरपतिर्न विज्ञातः, ततस्तद्गुणैरेवाकृष्टचित्तः क्षितीशो जगाम केवलिनः समीपं, ततश्च विधिवत् प्रणम्योपविष्टः समुचितप्रदेशे, ततः समाकर्णिता भवविच्छेदजनयित्री तद्देशना, ततश्चावसरे पृष्टं महीभृता, यथा भगवन्! इहागच्छता मया त्रिभुवनस्यापि प्रमोदप्रदानपटवीमवस्थामापन्नो महर्षिर्योऽभिवन्दितः सोऽयं महात्मा कः कथं च प्रतिबुद्ध इति प्रसादं विधाय निवेद्यतां, ततः केवलिना प्रोक्तम्-राजन्! महतीयं कथा, किन्तु यदि भवतां कौतुकं तदा संक्षिप्तामपि तां किंचित् कथयामः, श्रूयतामवहितैः, यथैष तावदसंव्यवहारनगरे संसारिजीवनामा कौटुम्बिक आसीत्, ततोऽन्यदा कर्म्मपरिणामक्षितीशनाटकाच्चारित्रधर्मराजसैनिकैरपहृत्य कस्मिंश्चिन्निर्वृत्तिपुरीं प्रक्षिप्ते तन्नाटकं तथैव पूरयितुमिच्छन्त्या भवितव्यताभिधानस्वभार्ययाऽसौ ततः समाकृष्य समानीतो व्यावहारिकैकाक्षपुरे, तत्रापि कर्म्मपरिणामराजस्य समीहितं किमपि साधयन्त्या तयैव भ्रामितः पृथिवीकायादिपाटकेषु, धृतश्च तेष्वपि प्रत्येकमसंख्येयं कालं, वनस्पतिपाटके त्वनन्तं कालं, ततश्च कर्म्मपरिणामसम्मतेनैव ततः समुच्चाल्य नीतोऽसौ तयैव विकलाक्षपुरे, भ्रामितः तत्रापि द्वीन्द्रियादिषु त्रिषु पाटकेषु, तत्रापि धृतः प्रत्येकमेव संख्येयं कालं, अथ तथैव कथमपि नीतोऽयमनयैव पञ्चाक्षपशुपत्तने, भ्रामितस्तत्रापि जलचरस्थलचरखचरसम्बन्धिनीष्वनेकभेदाभिन्नास्वनेकजातिषु, धृतश्चैतास्वपि प्रत्येकं

प्रभूतकालं, अथ बहोः कालात् केनचिदकामकष्टसहनादिलक्षणेन तदीयचरितेनैव किंचिद् रञ्जितया स्वभार्ययैव कर्म्मपरिणाम-क्षितीशं पर्यालोच्य प्रदत्तोऽस्य पुण्योदयाभिधानः सहायः, प्रेपितश्च मनुजनगर्यां, प्राप्तं च पुण्योदयवशेन तत्र राज्यं, मिलिताश्चासौ तत्र गतो मोहराजसम्बन्धिनामुत्कटक्रोधादिसैनिकानां, प्रतिपन्नाश्च ते तत्रानेन निविडमित्रतया. ततस्तद्वचनेन विहितान्यमुना अनेकासमञ्जसचेष्टितानि, रुष्टश्च तः कर्म्मपरिणामः, प्रकटितं बीभत्सं रूपमात्मनः, तदिदमालोक्य चिन्तितं भवितव्यतयाअहो कर्म्मपरिणामनृपतेः समीहितं चित्तमात्रपरिज्ञानादेव सर्वदैवाहं करोमि, अयमपि च मामित्थमेव समधिकं वा अनुवर्त्तयति, कुपितश्चातीव मद्भर्त्तरि इदानीमसौ दृश्यते, रुष्टा चाहमप्यस्य सम्बन्धिभिरेतैरसमञ्जसचेष्टितैस्तदयाम्येनं नारकपुरे इति विचिन्त्य कृतं तत्तथैव तया, विनाटितश्च संसारिजीवो विचित्रयातनाभिः, ततः प्रभूतकालपर्यन्ते आयुःपरिसमाप्तिनामिकां गुटिकां दत्त्वा समानीतः पुनरपि पञ्चाक्षपशुनगरे, ततोऽपि नीतः पुनरपि नारकपुरे, पुनस्तथैवानीतः पंचाक्षपशुपत्तने, इत्येवं प्रभूतगत्यागतिपर्यन्ते नीतः पुनरप्येकाक्षपुरे, भ्रामितस्तत्र पूर्वोक्तक्रमेण. एवं विकलाक्षपशुपुरयोरपि, ततः पुनरपि कदाचिन्नारकपुरादिष्वपि, एवं भ्रामयन्त्या तया अस्यैव सम्बन्धिभिः कैश्चित्तथाविधसुचरितैस्तुष्टया पुण्योदयं सहायं दत्त्वा प्रापितोऽसौ क्वचिद्राज्यं क्वचित् सामन्तपदं क्वापि मण्डलिकविभूतिं क्वचिदमात्यपदं क्वाप्युपरोहितपदं कदाचित् श्रेष्ठिपदं क्वचित् सामान्यत एव लक्ष्मीपतित्वं कदाचिन्नृदेवत्वमिति, तत्रापि प्रापितः कदाचित् प्रकर्षवर्तीं रूपसम्पदं कदाचिल्लावण्यलक्ष्मीं क्वापि सौभाग्यश्रियं क्वाप्युत्कर्षवर्तीं आदेयवाक्यतां क्वचिदद्भुतं पाण्डित्यं क्वापि विविधपार्षदप्रतिपत्त्या सर्वस्य पूज्यत्वं क्वापि नभोगमनाद्यनेकलब्धिसम्पन्नत्वमित्यादि, मोहराजसैनिकोपदिष्टैस्तु तैस्तैस्तथाविधदुश्चेष्टितैः प्रकुपितयाऽनया प्रापितोऽयमेव क्वचिच्चण्डालत्वं क्वचिद्वरुंडधीवर-

रजकलोहकारादित्वं क्वचिद्दरिद्रत्वं क्वापि रंकत्वं क्वचिद्दासत्वं क्वापि सेवकत्वं, तत्रापि गमितः क्वचित् अकर्पवत् कुरूपत्वं क्वापि दौर्भाग्यत्वं क्वचिदनादेयत्वं क्वापि रोगित्वं क्वापि क्षीणत्वं क्वापि सर्वशक्तिमस्त्वमित्यादि। तदेवमित्थं विचित्ररूपैर्विनाटयन्त्या अनया तावदसौ भ्रामितो यावदनन्तः काल इति, ततस्तत्पर्यन्ते कथमपीदानीमेतदीयेनैव केनापि प्रबलसुचरितेन रञ्जितयाऽनयाऽतीव पुष्टिमापन्नं पुण्योदयं सहायं दत्त्वा समानीतोऽसौ संसारिजीवः साकेतपुरनगरे, क्षिप्तश्च विश्वंभरराजपत्न्यां, अभ्यस्तः समस्त-कलाकलापः, केवलं धर्म्मकृत्येषु प्रवर्त्तितोऽपि न कथंचित् प्रवर्त्तते, न च तन्नामापि सहते, ततो विश्वम्भरराजः श्रमणोपासकः सखेदश्चिन्तयति, अहो-बावत्तरीकलापण्डितावि पुरिसा अपंडिता चेव । सव्वकलाणं पवरं जे धम्मकलं न जाणंति ॥ १ ॥" न जानाति मदीयः पुत्रो लेशमपि धर्म्मकलायास्तत् किमत्र कुर्म इति चिन्ताभरव्याकुलस्य समायातः सुप्रभ इति तत्र केवली, सहर्षं विधि-वद्वन्दित्वा च पृष्टः समये विश्वम्भरराजेन स्वपुत्रव्यतिकरं, यथा-भगवन् ! मम पुत्रो धर्म्मं प्रतिपत्स्यते न वेति?, महतीयमस्माकं चिन्ता, ततो ज्ञानिना प्रोक्तम्-महाराज ! विवेकिनां क्वचिदपि प्रयोजने स्वल्पापि चिन्ता कर्तुं न युज्यते, किं पुनर्महती ?, यतः " कज्जाइं अन्नहच्चिय जीवा चिंतंति निपुणमइणोऽवि । कुणइ पुण अन्नहच्चिय तिहुयणवलिओ विही ताइं ॥ १ ॥ पुव्वज्जिय-कम्मंपिय संपयविवयाओ चिंतइ जियाणं । जा उण चिंता तेसिं सा विहला दुक्खफलया वा ॥ २ ॥ जं जत्थ जया होही दिट्ठमणंतेहिं केवलीहिं तहा । तं अन्नहा न सकइ काउं सक्कोऽवि कयजत्तो ॥ ३ ॥ जं च जया न हु होही दिट्ठमणंतेहिं केवलीहिं तहा । तन्निव्वत्तणहेउं जत्तो विहलो सुराणंपि ॥ ४ ॥ तम्हा जं जह होही न वत्ति तं चेव संपयट्टंती । सामग्गी न हु सक्का निवारिउं तिहुअणेणावि ॥ ५ ॥" यतः—"सा सा सम्पद्यते बुद्धिः, सा मतिः सा च भावना । सहायास्तादृशा एव, यादृशी

भवितव्यता ॥ १ ॥" इत्यादि, ततो विश्वम्भरराजेन प्रोक्तं-यद्येवं तर्हि भगवन् ! प्रसीदन्तु पूज्यपादाः, इहापि पृच्छामः किंचित्, पूज्याभिप्रायेण तर्हि रोगी चिकित्सादिकं न कारयिष्यति, बुभुक्षितो भोजनार्थमुद्यमं न विधास्यति, वृत्तिबाधितस्तदर्थे न यतिष्यते, मोक्षार्थी तु तदर्थमनुष्ठानं न करिष्यति, ततः केवलिना प्रोक्तम्-मा करोतु, को निवारयिता ?, केवलं यस्मिन् समये तेषां तत्समीहितसिद्ध्या भवितव्यमेवेति केवलिनः पश्यन्ति तदा तस्मिन् विषयेऽनिच्छतामपि तेषां तत्रोपाये हठात् कथमपि प्रवृत्तिर्भविष्यत्येव, तथा च कैश्चित् साधुभिः केवली पृष्टो, यथा-वयमस्मिन् भवे सेत्स्यामो न वा ?, ज्ञानिना प्रोक्तम्-सेत्स्यथ एव, ततस्तैश्चिन्तितं- अहो केवलिवचनमन्यथा तावन्न भवतीति यथाकथंचित् सेत्स्यामो वयं, किमनया कष्टचेष्टया ?, किमिति भोगेभ्य आत्मानं वंचयाम इति विचिन्त्य परित्यक्तं व्रतं प्रतिपन्नो गृहवासः विगतशंका भुंजंति भोगान्, गच्छता कालेनान्यदा पर्यालोचितं तैः, यदुत न सुन्दरं विहितं अस्माभिः, यतो हन्त मोक्षप्राप्तिर्भवतु मा वा, किमनया चिन्तया ?, पुरुषेणात्मनोऽहितं तु परिहर्त्तव्यं, अहितश्च गृहवासः, इहलोकेऽपि वृत्तिबाधाचिंतादिजनितदुःखसंघातहेतुत्वात्, हितं च जिनवचनानुष्ठानं, इहलोकेऽपि निश्चिन्तत्वभुवनवन्द्यत्वादिगुणपरम्पराहेतुत्वादित्यादि परिभाव्य गृहीतं पुनरपि व्रतं, कृतं तीव्रतरमनुष्ठानं, ततः समुत्पाद्य केवलज्ञानं गताः सर्वेऽपि मोक्षमिति, तस्मात् समीहितप्रयोजनसिद्धिसमयेऽनिच्छतामपीत्थं तदुपाये प्रवर्त्तितव्यं, इत्थं च कुर्वतो यद्भवति तद्भवतु, न काचिद्वचनीयता, औत्सुक्यं चिंताव्याकुलता च पुनर्विवेकिना न क्वचित् कर्त्तव्या, विशेषतः पुनर्भवद्भिरात्मीयपुत्रविषया, यतश्चरमशरीरोऽयमस्मिन्नेव भवे सेत्स्यति, किं पुनर्धर्म्मप्रवृत्तिमात्रं?, तदेतदाकर्ण्य प्रहृष्टो विश्वम्भरराजो. भणितं चाभिचन्द्रराजेन-भगवता-निष्कारणबन्धुना केवलिना अपनीतस्तस्य संदेहः, एवं मन्ये विश्वम्भर-

राजस्तथा नानुगृहीतो यथा बृहत्संदेहापनोदेन वयमिति, ततः किमग्रे सञ्जातं तत्रेत्यादिश्यतां, ततः सुप्रभकेवलिना प्रोक्तं-राजंस्ततः कालेन विश्वम्भरक्षितिपतिना व्रतं जिघृक्षता राज्ये व्यवस्थापितः स निजपुत्रः **समरः**, साधिताश्चानेन पितुरप्यसिद्धा बहवो विषयाः, सञ्जातः समुदीर्णप्रतापो महानरपतिरिति । अन्यदा च समतिक्रान्ते कियत्यपि काले समुत्पन्नाऽस्य शरीरे प्रबला दाहवेदना, तया च पीडितः कृच्छ्रेण गमयति दिनानि, अत्रान्तरे चारित्रधर्म्मक्षितीशस्य समुत्पन्ना चिन्ता, यथा अहो अयं संसारिजीवः सुचिरं कदर्थितो मोहराजसैनिकैः, करुणारसप्रधानाश्च वयं, तद्यदि कथमप्यसौ तेभ्यो मोच्यते तदा संगतं भवतीति विचिन्त्याहूतः सद्बोधमन्त्री, निवेदितः स्वाभिप्रायः, ततः सद्बोधमंत्रिणा प्रोक्तम्-किमिहायुक्तं ?, केवलं विदुषा उपायत एव प्रयोजने प्रवर्त्तितव्यं, नानुपाये, महत्या अनर्थप्राप्तेश्च प्रसंगात्, उपायश्चायमत्र यदुत यूयं तावदनादिकालप्रभवा भवितव्यताऽपि च तत्प्रभवैव, तदनेन व्यतिकरेण भवतामसौ भगिन्येव, ततश्चेयमुभयबलसाधारणा सती कथमप्यनुकूल्य निजपक्ष एव क्रियते, तदेयं ससारिजीवमप्यस्मदीयपक्षं एव ग्राहयति, यदा च द्वावप्येतौ भवितव्यतासंसारिजीवौ अस्मदीयपक्ष एव भवतः तदा कियन्तो मोहराजादयो, हता एव ते वराकाः, ततश्चारित्रधर्मनरपतिनाऽभ्यधायि साधु वत्स ! त्वयोक्तं साधु !, क एवं परो वक्तुं जानाति?, तत् कथय कथं पुनरियमनुकूला सम्पद्यते, सद्बोधमंत्रिणोक्तं-यदि ससैन्याः स्वयमेव गच्छथ तदन्तिकं यूयमिति, ततः सहर्षं तत् प्रतिपद्योत्थितः सहसैव चारित्रधर्मराजः, सर्वेऽपि गतास्तत्र, कृतं सहर्षयाऽभ्युत्थानमनया, सन्मानिताः सर्वेऽपि यथार्हं, निवेदिते च तैः स्वाभिप्राये बृहत्पुरुषा एते मद्बान्धवा गृहे चागतास्तस्मान्माननीया एवेत्यादि विचिन्त्य तदीयोपरोधतः सर्वमभ्युपगतं तद् भवितव्यतया, प्रोक्तं च-यथा तिष्ठथ निश्चिंताः, अत्र व्यतिकरे सर्वमहं भलिष्यामि, केवलं मदीयाह्वानके समा-

यान् सद्बोधमंत्री समये प्रेषणीय इत्युक्त्वा विसर्जिताः सर्वे, गता च स्वयं तत्क्षणादेव परिगलितायां रात्रौ दाहवेदनासमाक्रान्तस्य क्षणमपि च निद्रामलभमानस्य समरनृपतेर्धवलगृहासन्नं भवितव्यता, पाठितश्चैकः पुरुष एतां गाथां यथा—"पुरिसाण पविचीओ सुहाहिलासीण तात्र सव्वाओ । धम्मं विणा य न सुहं धम्मो य न संगमूढाणं ॥ १ ॥" पतिता चेयं राज्ञः कर्णकोटरे, अवधारितं चैकं पदं, यथा धम्मं विणा य न सुहंति, न शेषं, वेदनाविधुरितचित्तत्वाद्, अत्रान्तरे भवितव्यतयाऽऽह्वानितः समागतः क्षणेनैव सद्बोधमंत्री, स्थितश्च राज्ञः समीपे, ततश्च भवितव्यताविहितमेव उपायं ज्ञात्वा भीतभीता निलीना मोहराजादयः, ततश्च चिंतितं राज्ञा-अहो केनापि गाथेयं पठिता, परं वेदनाविधुरतया मयैकमेव पदमवधारितं, न शेषं, यदिवा यत् कार्यं तदत्रापि विद्यत एव, यथा धर्म्मं विना सुखं कस्यचिन्न भवतीति, एतच्च ममानुभवसिद्धमेव, यतो बालकालादारभ्य पित्रादिवचनतोऽपि धर्म्मस्य वार्त्ताऽपि न कदाचिन् मया पृष्टा, तत इत्थं दुःखभाजनं सम्पन्नस्तिष्ठामि, तस्मादिदानीमपि युज्यते मम धर्म्मः कर्त्तुमित्युन्मीलितविशुद्धपरिणामः प्राहरिकान् प्रेष्य गाथापाठकपुरुषमाकारयति क्षितीशः, समानीतश्चान्विष्य तैरसौ, पाठितश्च पुनरपि राज्ञा तां गाथां, पठिता च तेन, ततः सद्बोधमन्त्रिसान्निध्यप्रभावत एव चिंतितं नरपतिना-अहो साधूक्तमस्यां गाथायां यथा सुखार्थिनामेव गृहीतागृहीतव्रतानां च जीवानां सर्वा एव प्रवृत्तयः क्रियासु, सुखं च न धर्म्मं विना, अन्यथा सर्वस्य तत्प्रसंगात्, धर्म्मश्च न संगमोहितानां, किंतु निष्परिग्रहाणामेव, गृहीतव्रतानामेवेत्यर्थः, तत् किमिह बहुना ?, यदि कथमप्येतद्रोगापगमो भवति तदा प्रभात एव व्रतं गृहीत्वा भवामि निःसंग इति सद्बोधमंत्रिणा सह पर्यालोच्य सुप्तः क्षणमेकं राजा, प्रतिबुद्धश्च क्षणांतरे, ततो जातं किंचिद्वेदनालाघवं, अत्र चांतरे निलीनेनापि मोहराजेन निरूपिताः शनैः शनैः रागकेशरिप्रभृतयस्तत्समीपे,

प्रदत्तश्च निष्कर्णजापः, ततश्चिन्तितं राज्ञा-मया व्रतग्रहणप्रतिज्ञा कृता, परं तथापि बालः पुत्रः तरुणः कलत्रवर्गः अनाथाः प्रजाः, तस्मात् कतिपयदिनपर्यन्ते ममेदं ग्रहीतुं युज्यत इत्यादि विचिन्त्य निवेदितो निजकाभिप्रायः, किन्तु तस्य मोहराजवष्टस्य सम्बन्धि किंचिद् दुष्टं मानसं, तद्विलसितं सर्वमेवेदं, अन्यथाऽसारे शरीरे परिगलद्यौवने विलसत्सु रोगेषु प्रभवन्त्यां जरायां समासन्ने मृत्युसैन्ये मायेन्द्रजालसदृशे जीवलोके किं देवोऽप्येवं कदाचित् पर्यालोचयति?, ततो देव! एकोऽपि मुहूर्तो विघ्न एवेत्यादि विचिन्त्य अवधीर्य चैकांताहितं मोहराजदुष्टकटकचेष्टितं परित्यज्यतां प्रस्तुतधर्म्मप्रयोजने विलम्बबुद्धिमित्यादिवचनैस्तमुत्साह्य सद्बोधमंत्रिणा समाहूता सा, कथितश्च तस्याः सर्व एव प्रस्तुतव्यतिकरः, ततो मोहनृपकटकस्योपरि प्रकुपितयाऽनया संसारिजीवहस्ते समर्पितो जीववीर्यकृपाणः, तेन च ताडितानि सर्वाण्यपि मोहराजमानुषाणि, ततः प्रभाते धर्म्मबुद्ध्यनुभावात् सकलदाहवेदनाविप्रमुक्तः सुतं राज्ये व्यवस्थाप्य समरनृपतिर्जनकदेशनाकर्त्तुरेव केवलिनः समीपे विधिवद्दीक्षां गृहीत्वा चारित्रधर्मराजसान्निध्यं प्रतिपन्नः, ततोऽल्पेनैव कालेन सूत्रार्थावधीत्य गीतार्थः संजातो, गुरुणा सह विहरन् स एव समरराजमहर्षिरिहायातः त्वया महाराजमार्गे समागच्छता प्रणतः, स चाहमेतद्गुरुः केवलीति, ततोऽभिचंद्रक्षितीशेन चिंतितं-अहो विश्वम्भरराजदेशनाव्याजतोऽनेनैव भगवताऽस्मत्सन्देहापनोदः कृतः, तस्मात् सर्वप्रकारैरस्माकमेत एवोपकारिण इति, अत्र चांतरे समरराजमहर्षिसमीपे सुरसंघात आगच्छन् दृष्टः क्षितीशेन, ततः कौतुकात् पृष्टः केवली, कथितं चानेन-यथा स्वप्रियतमाभवितव्यतासाहाय्यात् निहत्य समस्तमपि मोहराजबलं सम्प्राप्य केवलज्ञानं भूत्वा चांतकृत्केवली गतो निर्वृतिपुरीं समरराजमहर्षिः, भर्त्तारं चापश्यन्ती मुहुर्मुहुरूर्ध्वमवलोकयंती दीनवदना महता २ शब्देन रोदिति वराकी भवितव्यता, प्रलपति च यथा-" यो ध्रुवाणि परित्यज्य,

अध्रुवाणि निषेवते । ध्रुवाणि तस्य नश्यन्ति, अध्रुवं गतमेव हि ॥ १ ॥" ध्रुवश्च नारीणां भर्तृपक्षोऽध्रुवश्च बंधुपक्षः, ततो मया अध्रुवाणां बंधूनां वचनेन समुपेक्षितो निजभर्त्ता, गृहीतं स्वयमेव वैधव्यं, बंधुभिश्च तैः किमिदानीं परित्राणं भविष्यति ?, अत एव च स्त्रियः पाश्चात्यबुद्धयः पठ्यन्ते शास्त्रेष्वपि "इय समरराजचरिए केवलिणा अंतरंगभंगेहिं । कहिए संवेगकरे अभिचंदनराहिवोऽवि तहिं ॥ १ ॥ दिक्खं पवज्जिऊणं उग्गं काऊण तह तवच्चरणं । पावियकेवलनाणो धुयकम्मंसो गओ सिद्धिं ॥ २ ॥"

इति समरराजकथानकम् ॥

तस्मात् स्वकर्मविवरे-स्वकर्मक्षये प्राणिनः कार्यं साधयन्तीति ॥

तम्हा सकम्मविवरे कज्जं साहंति पाणिणो सव्वे । तो तह जएज्ज सम्मं जह कम्मं खिज्जइ असेसं ॥४९८॥

सुबोधा । केनोपायेन पुनः कर्म्म क्षीयत इत्याह—

कम्मक्खए उवाओ सुयाणुसारेण पगरणे एत्थ । लेसेण मए भणिओ अणुट्ठियव्वो सुबुद्धीहिं ॥ ४९९ ॥

सुगमा । केषां पुनरिदं प्रकरणं परिणमदुपकाराय भवतीत्याह—

पायं धम्मत्थीणं मज्झत्थाणं सुनिउणबुद्धीणं । परिणमइ पगरणमिणं न संकिलिट्ठाण जंतूणं ॥ ५०० ॥

सुगमा । अथ ग्रंथकार एव स्वनाम प्रकारांतरेण निर्दिशति—

हेममणिचंददप्पणसूरिरिसिप्पढमवन्ननामेहिं । सिरिअभयसूरिसीसेहिं विरइयं पगरणं इणमो ॥५०१॥

स्पष्टा । किंनामकं किंफलं च पुनरिदं प्रकरणमित्याह—

उवएसमालनामं पूरियकामं सया पढंताणं । कल्लाणरिद्धिसंसिद्धिकारणं सुद्धहिययाणं ॥ ५०२ ॥

प्रकटार्था ॥ अथाधिकारसंख्यां ग्रंथसंखयां चाह—

एत्थं वीसऽहिगारा जीवदयाईहिं विविहअत्थेहिं । गाहाणं पंचसया पणुत्तरा हुंति संखाए ॥ ५०३ ॥

इयमपि सुगमा, नवरं जीवदयादिभिरर्थैः कृत्वा इह प्रकरणे विंशतिरधिकारा भवन्ति, तद्यथा दानं त्रिविधं शीलं तपश्च
सम्यक्त्वं चरणशुद्धीत्यादयो भावनाद्वारसम्बन्धिनश्चतुर्दशाधिकारा इति सर्वेऽप्येकोनविंशतिः, विंशतितमस्तु प्रकरणोपसंहारद्वारा-
धिकार इति ॥ इह यद्यप्यन्यसम्बंधिना पुण्येनान्यस्योपकारो न जायत इति समयस्थितिस्तथाऽप्युदाराशयताप्रधानं वचनं
कर्म्मगमाय सम्पद्यत इति वृद्धप्रवादस्ततं आह—

उवएसमालपयरणे जं पुन्नं अज्जियं मए तेण । जीवाणं हुज्ज सया जिणोवएसम्मि पडिवत्ती ॥ ५०४ ॥

गतार्था । अथ श्रुतबहुमानार्थं शिष्यप्रशिष्यपरम्परया प्रकरणस्य स्थैर्यार्थं च अपश्चिममंगलमाह—

जाव जिणसासणमिणं जाव य धम्मं जयम्मि विप्फुरइ । ताव पढिज्जउ एसा भव्वेहिं सया सुहत्थीहिं ॥५०५॥

सुगमा ॥

इति श्रीहेमचन्द्रसूरिविरचितोपदेशमालावृत्तिः समाप्तेति ।

# प्रशस्तिः ।

श्रीप्रश्नवाहनकुलाम्बुनिधिप्रसूतः, क्षोणीतलप्रथितकीर्तिरुदीर्णशाखः ।
विश्वप्रसाधिनाविकल्पितवस्तुरुच्चैश्छायाश्रितप्रचुरनिर्वृतभव्यजन्तुः ॥ १ ॥
ज्ञानादिकुसुमनिचितः फलितः श्रीमन्मुनीन्द्रफलवृन्दैः । कल्पद्रुम इव गच्छः श्रीहर्षपुरीयनामास्ति ॥ २ ॥
एतस्मिन् गुणरत्नरोहणगिरिर्गाम्भीर्यपाथोनिधिस्तुङ्गत्वानुकृतक्ष्माधरपतिः सौम्यत्वतारापतिः ।
सम्यग्ज्ञानविशुद्धसंयमपतिः स्वाचारचर्यानिधिः, शांतः श्रीजयसिंहसूरिरभवन्निःसंगचूडामणिः ॥ ३ ॥
रत्नाकरादिवैतस्मात्, शिष्यरत्नं बभूव तत् । स वागीशोऽपि नो मन्ये, यद्गुणग्रहणोत्सुकः ॥ ४ ॥
श्रीवीरदेवविबुधैः सन्मंत्राद्यतिशयप्रवरतोयैः । यैर्द्रुम इव संसिक्तः कस्तद्गुणकीर्तने विबुधः ? ॥ ५ ॥
तथाहि-आज्ञा यस्य नरेश्वरैरपि शिरस्यारोप्यते सादरं, यं दृष्ट्वाऽपि मुदं व्रजन्ति परमां प्रायोऽतिदुष्टा अपि ।
यद्वक्त्राम्बुधिनिर्यदुज्ज्वलवचःपीयूषपानोद्यतैर्गीर्वाणैरिव दुग्धसिंधुमथने तृप्तिर्न लेभे जनैः ॥ ६ ॥
कृत्वा येन तपः सुदुष्करतरं विश्वं प्रबोध्य प्रभोस्तीर्थं सर्वविदः प्रभावितमिदं तैस्तैः स्वकीयैर्गुणैः ।
शुक्लीकुर्वदशेषविश्वकुहरं भव्यैर्निबद्धस्पृहं, यस्याशास्वनिवारितं प्रचरति श्वेताम्बुगौरं यशः ॥ ७ ॥
यमुनाप्रवाहविमलश्रीमन्मुनिचन्द्रसूरिसंपर्कात् । अमरसरितेव सकलं पवित्रितं येन भुवनतलम् ॥ ८ ॥

विस्फूर्जत्कलिकालदुस्तरतमःसंतानलुप्तास्थितिः, सूर्येणेव विवेकभूधरशिरस्यासाद्य येनोदयम् ।
सम्यग्ज्ञानकरैश्चिरंतनमुनिक्षुण्णः समुद्योतितो, मार्गः सोऽभयदेवसूरिरभवत् तस्य प्रसिद्धोमिभिः ॥ ९ ॥
निजशिष्यलवश्रीहेमचन्द्रसूरेर्मुखेन विवृतिरियम् । सूत्रयु।। तैरेव हि विहिता श्रुतदेवतावचनात् ॥ १० ॥
प्रत्यक्षरं गणनया सर्वग्रंथाग्रमस्य जातानि । त्रयोदश सहस्राण्यष्टषष्टियुतान्यष्ट शतानि ॥ ११ ॥
ग्र० ।१३८६८ ॥ कल्याणमस्तु॥

श्रीकृष्णर्षिगच्छे तपापक्षे भ० श्रीपूण्यवर्द्धनसूरयः तेषां पट्टे भट्टारकश्रीश्रीजयसिंघसूरयः
तत्पट्टे भ० श्रीश्रीश्रीविनयचन्द्रसूरीश्वराणां शिष्यगणिगोरा पठनार्थम् ॥



## विक्रयपुस्तकानि

| | |
|---|---|
| दशवैकालिकचूर्णिः ... | ४-०-० |
| उत्तराध्ययनचूर्णिः ... | ३-८-० |
| ३५०, १५०, १२५ स्तवनानि | ०-८-० |
| पंचाशकादिशास्त्राष्टकं .... | ३-०-० |
| पंचाशकादिदशप्रकरणादिक्रमः | ३-०-० |
| ज्योतिष्करंडकटीका .... | ३-०-० |
| पंचवस्तुः स्वोपज्ञटीकायुक्तः . . | २-४-० |
| द्रव्यलोकप्रकाशः .... | २-०-० |
| क्षेत्रलोकप्रकाशः ... | २-८-० |
| युक्तिप्रबोधः स्वोपज्ञः .... | १-०-० |
| आचाररत्नाकरः ... | २-४-० |
| नंदीवृत्तिः . | १-०-० |
| पगरणसंदोहो .... | ०-१२-० |

| | |
|---|---|
| अर्हिंसाष्टकः सर्वज्ञसिद्धिरैन्द्रस्तुति | ०-८-० |
| अनुयोगचूर्णिहारिभद्रीयवृत्तिश्च | १-४-० |
| नंदीचूर्णिहारिभद्रीयवृत्तिः गाथाश्च | १-४-० |
| नवपदप्रकरणबृहद्वृत्तिः ... | ३-०-० |
| बारसासूत्रं (सचित्रं) | १२-०-० |
| ऋषिभाषितानि .... | ०-२-० |
| प्रत्याख्यानविशेषणवती वीशवीशी | १-८-० |
| विशेषावश्यकगाथानुक्रमादि | ०-३-० |
| ललितविस्तरा .... | ०-१०-० |
| तत्त्वतरंगिणी .... | ०-८-० |
| बृहत्सिद्धप्रभा व्याकरण .. . | २-८-० |
| आचारांगसूत्रवृत्तिः .... | ७-०-० |
| भगवतीजी दानशेखरसूरिटीका.... | ५-०-० |

| | |
|---|---|
| पुष्पमाला मलधारीयहेमचन्द्रकृत | ६-०-० |
| तत्त्वार्थहारिभद्रीयटीका सभाष्य | ६-०-० |
| मध्यमसिद्धप्रभा(व्याकरण),, .. | ०-८-० |
| पर्युषणादशशतकं .... | ०-१०-० |
| विशेषावश्यकभाष्य(कोट्याचार्य कृतटीका) (प्रथमो विभागः) | ५-०-० |
| बुद्धिसागर .... | ०-३-० |
| भवभावनावृत्ति पू. हेमचन्द्रसूरि | प्रेसमां |
| कल्पकौमुदी .... | ,, |
| उत्पादादिसिद्धः .... | ,, |
| विशेषावश्यकभाष्यकोट्याचार्य कृतटीका) द्वितीयभागः | प्रेसमां |
| षोडशकः सटीकः | ,, |

प्राप्तिस्थान १ जैनानन्दपुस्तकालय गोपीपुरा—सुरत. २ मास्तर कुंवरजी दामजी. मोती कडीयानी मेडी —पालीताणा.

विस्फूर्जत्कलिकालदुस्तरतमःसंतानलुप्तस्थितिः, सूर्येणेव विवेकभूधरशिरस्यासाद्य येनोदयम् ।
सम्यग्ज्ञानकरैश्चिरंतनमुनिक्षुण्णः समुद्योतितो, मार्गः सोऽभयदेवसूरिरभवत् तस्य प्रसिद्धोर्मिभिः ॥ ९ ॥
निजशिष्यलवश्रीहेमचन्द्रसूरेर्मुखेन विवृतिरियम् । सूत्रयुता तैरेव हि विहिता श्रुतदेवतावचनात् ॥ १० ॥
प्रत्यक्षरं गणनया सर्वग्रंथाग्रमस्य जातानि । त्रयोदश सहस्राण्यष्टषष्टियुतान्यष्ट शतानि ॥ ११ ॥

ग्रं० ।१३८६८ ॥ कल्याणमस्तु॥

श्रीकृष्णर्षिगच्छे तपापक्षे भ० श्रीपूण्यवर्धनसूरयः तेषां पट्टे भट्टारकश्रीश्रीजयसिंघसूरयः
तत्पट्टे भ० श्रीश्रीश्रीविनयचन्द्रसूरीश्वराणां शिष्यगणिगोरा पठनार्थम् ॥

